


Rs. 30/-




Rs. 40/-




Rs. 30/-




Rs. 30/-




Rs. 25/-




Rs. 30/-

**CHANDAMAMA BOOKS ARE ALREADY A LEGEND! THEY OPEN A NEW HORIZON ON THE WORLD OF LITERATURE FOR THE YOUNG**

Added to the six titles by **Manoj Das** is the charming seventh–

**WHEN THE TREES WALKED**

by the inimitable story-teller **Ruskin Bond**




Rs. 30/-

Among the titles in the process of production are:

**STORY OF KRISHNA**
**STORY OF RAMA**
**STORY OF BUDDHA**



For details, write to:

**CHANDAMAMA BOOKS**
Chandamama Buildings
Vadapalani, Madras - 600 026.

## प्रिमियर कैमरा




### 35 mm काम्पाक्ट कैमरा

✲ रंगीन एवं ब्लैक एण्ड व्हाइट फोटो देनेवाला

✲ फ्लैश-अटैचमेंट सिस्टम

✲ उपहार के लिए श्रेष्ठ

✲ खुद रोज़गारी के लिए उपयोगी आप अच्छी खासी मासिक कमाई कर सकते है

**कीमत रु. ४५० केवल**

**(मार्केट कीमत रु. ७५०/- है)**

**नापसंद आने पर कीमत वापस**

## ००७ टॉय रिवालवर



**बिलकुल नयी टेकनालजि में बनायी गयी ऑटोमैटिक टाय रिवालवर**

जानवरों, पक्षियों एवं चोरों से अपनी आत्म-रक्षा हेतु तथा नाटक, पिकनिक आदि के लिए ७ राउन्ड ऑटोमैटिक रिवॉल्वर।

**कीमत रु. २०० केवल**



**१०० बुलेट एवं स्पेशल वेल्ट-केश मुफ्त**

**लाइसेंस आवश्यक नहीं**

**पैकिंग खर्च, डाक खर्च अलग**

**दोनों सामान एक साथ मंगाने पर डाक खर्च मुफ्त, अपना पता अंग्रेजी में दे और उत्पाद का नाम उल्लेखित करें**

# VIVEK TRADERS (CV)

**P.O. MAIRA BARITH (GAYA)**

# वाक्यजिज्ञासा - १२

*(चिन्तनार्हविषययुक्तं वाक्यं, स्थूलाक्षरैः मुद्रितम् उपरि भवति । तस्य अधः तत्सम्बद्धं विवरणं भवति । ततः अन्यत् वाक्यं, पुनः विवरणम् । एवम् अत्र क्रमः ।*

*विवरणसन्दर्भे प्रथमं साररूपेण किञ्चित् उच्यते । अनन्तरं तस्य स्पष्टज्ञानार्थं शास्त्रीयं विवरणम् अपि दीयते । शास्त्रीयविवरणस्य ज्ञाने केचन क्लेशम् अनुभवेयुः । तादृशाः वाक्येन, वाक्यद्वयेन, वाक्यैः वा प्रथमं दत्तं सारभागं पश्यन्ति चेदपि अलम् । तावता एव 'किं शुद्धम्' इति ज्ञायते । 'किमर्थम् एवम्' इति ये ज्ञातुम् इच्छन्ति तादृशानां कृते अग्रिमं विवरणम् ।)*

**४९. दुष्टान् शिक्षितुं राजा सैनिकान् प्रेषितवान् ।**

❑ **'दुष्टान् दण्डयितुम्'** इति प्रयोगः अत्र उचितः स्यात् । शिक्षधातुः (शिक्षते) विद्योपादानार्थे अस्ति, न तु दण्डार्थे । प्रकृतवाक्ये तु दुष्टानां दण्डनं निग्रहणं वा अपेक्ष्यते, न तु दुष्टानां बोधनम् । अतः **'दण्डयितुम्'** इन्येव प्रयोगः उचितः ।

'सैनिकाः दुष्टानां दण्डनं कुर्वन्ति । ततः दुष्टाः सद्व्यवहारबोधनं प्राप्नुवन्ति । एवं च सैनिकाः दुष्टान् विद्यां बोधयन्ति इति तात्पर्यं सिद्धं भवति' इति वदन् कश्चित् यदि पूर्वोक्तं प्रयोगं कथञ्चित् समर्थयितुम् इच्छति तर्हि एतद्विषये न किञ्चित् ब्रूमः वयम् ।

छात्रः संस्कृतं शिक्षते । अध्यापकः छात्रं संस्कृतं शिक्षयति । शिक्षयति इत्यस्य तुमुन्नन्तरूपं 'शिक्षयितुम्' इति । पूर्वोक्ते वाक्ये शिक्षणपर्यन्तस्य अर्थस्य कथञ्चित् ग्रहणं कृतं चेदपि 'शिक्षितुम्' इत्यस्य अर्थं 'विद्यां दातुम्' इति वक्तुं न शक्नुयाम एव । (यतः अण्यन्तस्य तुमुन् तत्र ।) 'अन्तर्भावितण्यर्थः अत्र । अतः स्वार्थरूपम् एव प्रेरणार्थं द्योतयति' इति यदि प्रतिपाद्यते तर्हि 'भवतु नाम कामम्' इति वदेम वयम् । 'महता परिश्रमेण कथञ्चित् एतत् रूपं समर्थनीयम् एव' इति चिन्तनं किमर्थम् इति तु न जानीमः ।

**५०. मम पुत्रम् उज्जीवितुम् आगतः भवान् देवः एव ।**

❒ **'उज्जीवयितुम्'** इति प्रयोक्तव्यम् । प्राणधारणार्थकः जीवधातुः अकर्मकः । **'उत्'**-उपसर्गयुक्तः अपि सः तादृशः एव । पुत्रः उज्जीवति । अन्यः तम् उज्जीवयति । उज्जीवयति इत्यत्र णिच्प्रत्ययः । तस्य तुमुन्नन्तं रूपं तावत् उज्जीवयितुम् इति । अतः पूर्वोक्ते वाक्ये **'उज्जीवयितुम्'** इत्येतस्य पदस्य प्रयोगः एव साधुः ।

**५१. एतस्मिन् वर्षे वयं सुभाश्चन्दशताब्दीकार्यक्रमम् आयोजितवन्तः आस्म ।**

❒ **शताब्दकार्यक्रमः** इति प्रयोक्तव्यम् । 'शताब्दी' इति पदम् अत्र असाधु । अत्र शताब्दशब्देन शततमं वर्षं (अब्दः) गृह्यते । शततमः अब्दः शताब्दः । अब्दशब्दः पुंल्लिङ्गे । अतः **'शताब्दः'** इति प्रयोगः अत्र साधुः ।

**५२. दशमशताब्द्यां ----- नाम राजा आसीत् ।**

❒ **दशमशतब्द्याम्** इति प्रयोगः साधुः एव । एतस्मिन् वाक्ये 'शतवर्षाणां समूहः' इत्यर्थः इष्यते । शतस्य अब्दानां समाहारः शताब्दी इति द्विगुसमासः । (सप्तशती, त्रिशती, पञ्चवटी इत्यादिषु यथा तथैव अत्रापि ।) अतः एव ईकारान्तत्वं स्त्रीत्वं च । एतस्मिन् एव अर्थे शतकशब्दः अपि प्रयोक्तुं शक्यः । अतः **'दशमे शतके'** इत्यपि प्रयोगः साधुः एव ।

वस्तुतः तु शताब्द-शताब्दीशब्दौ भ्रमजनकौ स्तः । शताब्दशब्दः (अकारान्तः) कुत्र प्रयोक्तव्यः, शताब्दीशब्दः (ईकारान्तः) कुत्र प्रयोक्तव्यः इति जिज्ञासा स्यात् बहूनाम् । शततमं वर्षं (एकवर्षमात्रम्) यत्र गृह्यते तत्र शताब्दशब्दः (अकारान्तः) प्रयोक्तव्यः । शतवर्षाणां समूहः यत्र विवक्षितः तत्र शताब्दीशब्दः (ईकारान्तः) प्रयोक्तव्यः । इति विवेकः ।

*तयोः एव शब्दयोः साध्वसाधुप्रयोगौ यथा -*

i) वयं सुभाश्चन्दशताब्दीकार्यक्रमं कृतवन्तः । (×) - असाधुप्रयोगः ।
वयं सुभाश्चन्द्रशताब्दकार्यक्रमं कृतवन्तः । (✓) - साधुप्रयोगः ।

ii) दशमशताब्दे --- नाम राजा आसीत् । (×) - असाधुप्रयोगः ।
दशमशताब्द्यां --- नाम राजा आसीत् (✓) - साधुप्रयोगः ।



# चन्दमामा

## एप्रिल् -१९९७



## अन्तरङ्गम्






प्रतिकृतिमूल्यं रू. ६-००

वार्षिकं ग्राहकशुल्कं रू. ७२-००

# चन्दमामा

संस्थापकः - **'चक्रपाणिः'** सञ्चालकः - **'नागिरेड्डी'**




## कृतज्ञताप्रदर्शनार्थं योग्यः मार्गः

जनवरीमासस्य २६ तमे दिनाङ्के गणराज्योत्सवदिने शोभनवस्त्रधारिभिः तेजस्विभिः बालैः युक्ता सभा शोभते स्म । ते बालाः के ? ते च आसन् १९९६तमवर्षस्य शौर्यप्रशस्तेः विजेतारः । एषा प्रशस्तिः 'इण्डियन् कौन्सिल् फार् चैल्ड् वेल्फर्'नामिकया संस्थया दीयते । केभ्यश्चित् दिनेभ्यः पूर्वं सम्मान्येन प्रधानमन्त्रिणा एताः प्रशस्तयः वितीर्णाः । एताः प्रशस्तयः धनेन प्रमाणपत्रेण च युक्ताः आसन् । तथैव क्रीडनकैः पुस्तकैः चापि युक्ताः आसन् ।

गतेभ्यः विंशतिवर्षेभ्यः एषा प्रशस्तिः दीयमाना अस्ति । एतां प्रशस्तिम् अधिकृत्य कैश्चित् प्रमुखचिन्तकैः अमूल्यः कश्चन प्रश्नः पृष्टः अस्ति यत् इदानीं प्रशस्तिः या दीयते तस्याः उपयोगितां वर्धयितुं किं न शक्येत ? इति ।

प्रशस्तिदानसन्दर्भे यत् धनं दीयते तत् तु अचिरात् एव व्ययितं भवेत् । स च व्ययः बालानां निमित्तम् एव भवेत् इत्यपि न । क्रीडनकानि तु बाल्ये एव शोभन्ते । तत्रापि तेषां जागरूकतया रक्षणं करणीयं भवति । पुस्तकानि जागरूकतया रक्षितानि चेत् प्रायः किञ्चिद्दीर्घकालम् उपयोगाय भवेयुः, तथापि तानि न चिरस्थायीनि ।

प्रायः एते प्रशस्तिविजेतारः बालाः निर्धनकुटुम्बे जाताः भवन्ति । ५-१५ वर्षीयाः भवन्ति च । भाविजीवने एतेषां विद्याभ्यासः गगनकुसुमायते क्वचित् । अतः, एतादृशानां बालानां विद्यालयीय-महाविद्यालयीय-अध्ययनार्थं साहाय्यं कृतं चेत् प्रायः उपयोगिता अधिका स्यात् । अन्यच्च ते यावत् विद्याक्षेत्रे भवन्ति तावत् अन्ये विद्यार्थिनः ततः प्रेरणां प्राप्तुम् अर्हन्ति अपि ।

स्वप्राणान् अपि पणीकृत्य, प्राणापायम् अपि अविगणय्य ये अन्येषां प्राणानां रक्षणार्थं साहसं कृतवन्तः तेषां विषये योग्यां कृतज्ञतां प्रदर्शयितुम् एषः कश्चन योग्यः मार्गः ।

सम्पुटः - १४ एप्रिल् - १९९७ सञ्चिका - १

प्रतिकृतिमूल्यं रू. ६.०० * वार्षिकं ग्राहकशुल्कं रू. ७२.००



# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | | | |
|---|---|---|---|---|---|
| अनपेक्षमाणः | - | undesired | नीरसता | - | sapless |
| अनुपमा | - | incomparable | पङ्कः | - | mud |
| अपख्यातिः | - | disrepute | प्रत्यग्रम् | - | fresh |
| अर्बुदरोगः | - | cancer | प्रभवति | - | enables |
| अवधानम् | - | concentration | प्रमाद्यति | - | makes mistake |
| आवुत्तः | - | brother-in-law | भल्लातकम् | - | cashewnut |
| आसन्नः | - | nearing | भूपटः | - | world-map |
| उपेक्षितः | - | neglected | मस्तिष्कम् | - | brain |
| कशा | - | whip | महिषी | - | she buffalo |
| केदारः | - | field | मिष्टान्नम् | - | sweet dish |
| खनी | - | mine | मुखस्तुतिः | - | flattery |
| गोपयति | - | conceals | मूल्याङ्कः | - | stamp |
| गोभरः | - | compost | लिपिकारः | - | clerk |
| ग्रीष्मकालः | - | summer | विषण्णा | - | sorrowful |
| चिक्रोडः | - | squirrel | वैषम्यम् | - | hatred / hate (v) |
| छदिः | - | roof | शलाका | - | stick |
| तण्डुलः | - | rice | शलाटुः | - | unripe(fruit) |
| तैलपः | - | cockroach | शिथिलीकृतम् | - | loosned |
| धर्ता | - | wearer | शिरस्त्रम् | - | cap |
| निश्शक्ता | - | weak | सञ्चितम् | - | heaped |

वार्ताविशेषः -

# अमेरिकाध्यक्षः

अमेरिकादेशस्य अध्यक्षत्वेन श्वेतभवने द्वितीयवारं शपथग्रहणस्य अनन्तरं विलियं जाफर्सन्-क्लिण्टन्वर्यः आत्मानं २०-२१ शताब्द्योः सेतुत्वेन उपवर्णितवान् । यतः बिल् क्लिण्टन् एतस्याः शताब्द्याः अन्तिमाध्यक्षः अस्ति, आगामिशताब्द्याः आदिमाध्यक्षः भविष्यति च । अमेरिकादेशस्य ४२तमः अध्यक्षः अस्ति एषः । 'द्वितीय-जागतिक-युद्धस्य अनन्तरं द्वितीयवारं चितः डेमाक्रटिक्पक्षीयः अध्यक्षः' इति कीर्तिः अपि अस्ति एतस्य ।

अमेरिकादेशे षष्टिवर्षेभ्यः पूर्वं डेमाक्रटिक्-पक्षीयः द्वितीयवारम् अध्यक्षत्वेन चितः आसीत् । तस्य नाम आसीत् फ्रांक्लिन् डिलानो रूस्वेल्ट् इति । सः १९३२ तमे वर्षे प्रथमवारं, ततः १९३६ तमे वर्षे द्वितीयवारं च चितः आसीत् । रूस्वेल्ट्वर्यस्य अनितरसाधारणं वैशिष्ट्यं नाम सः तृतीयवारं चतुर्थवारं चापि अध्यक्षत्वेन चितः आसीत् । जागतिक-युद्धसमाप्तिसन्दर्भे तन्नाम १९४५ तमे वर्षे एप्रिल्मासस्य १२ दिनाङ्के अध्यक्षपदव्यां स्थितः एव मरणं प्राप्तवान् आसीत् ।

रूस्वेल्टस्य मरणस्य अनन्तरं १९४५ तमे वर्षे ह्यारी एस्. ट्रूमन् अध्यक्ष-पदम् आरूढवान् । १९६० तमे वर्षे अन्यः डेमाक्रटिक्नायकः जान्-केनडी अध्यक्षत्वेन चितः अभवत् । १९६३ तमे वर्षे नवेम्बर् २२ तमे दिनाङ्के तस्य हननं जातम् । तदनन्तरं लिण्डन् बि. जान्सन् (डेमाक्रटिक्-पक्षीयः) अध्यक्षः जातः । अनन्तरकाले अध्यक्षत्वेन चितः डेमाक्रटिक्पक्षीयः जिम्मि कार्टर् (१९७७-१९८१) । १९९२ तमे वर्षे बिल् क्लिण्टन् अध्यक्षत्वेन चितः सन् १९९३ तमे वर्षे जनवरीमासस्य २०तमे दिनाङ्के पदवीस्वीकारं कृतवान् ।



शतवर्षेभ्यः पूर्वं तन्नाम एतस्याः शताब्द्याः आरम्भकाले रिपब्लिक्पक्षीयः विलियं मेक्लिन् अध्यक्षपदवीम् अलङ्कृतवान् आसीत् ।

१९९६ तमे वर्षे नवम्बर्मासे प्रवृत्ते निर्वाचने ४९% मतानि प्राप्तानि क्लिण्टन्वर्येण । तस्य प्रमुखप्रतिस्पर्धी रिपब्लिक्पक्षीयः अभ्यर्थी राबर्ट्डोल्वर्यः ४१% मतानि प्राप्तवान् आसीत् । स्वतन्त्राभ्यर्थी रास्पेराट्वर्यः ८% मतानि प्राप्तवान् आसीत् ।

जनवरीमासस्य २१ दिनाङ्के पदवीस्वीकारं कृतवान् क्लिण्टन्वर्यः प्राधान्येन ऐक्यम् अधिकृत्य भाषणं कृतवान् । 'अग्रिमेषु चतुर्षु वर्षेषु देशस्य एकतावर्धनार्थम् अहं कार्यं करिष्यामि' इति सः उक्तवान् । 'अमेरिकादेशः अखण्डः । अत्रत्याः प्रजाः अभिन्नाः । सर्वेषां लक्ष्यम् अपि अभिन्नम्' इति तेन उक्तम् । 'मम काले शासनं सरलं सुदृढं च भविष्यति' इति तेन प्रतिपादितम् । ''प्रकाशमानस्य शोभमानस्य अमेरिकादेशीयस्य स्वातन्त्र्यदीपस्य कान्तिः समग्रे प्रपञ्चे यथा प्रसरेत् तथा करिष्यामि अहम्'' इति प्रतिज्ञां कृतवान् सः । 'अग्रिमशतके प्रजाप्रभुत्व-प्रपञ्चस्य निर्माणं भविष्यति' इति अभिप्रैति क्लिण्टन्वर्यः ।



# गोपालस्य उपायः

गविपुरग्रामे गोपालः नाम कश्चित् बुद्धिमान् युवकः आसीत् । तस्य एकं वैशिष्ट्यम् आसीत् यत् यः कोऽपि तं वञ्चयति चेत् सः वञ्चकेन आश्रितम् उपायम् एव आश्रित्य तं वञ्चयति स्म ।

अथ कदाचित् अनन्तरामशास्त्री नाम पुरोहितः नागराजस्य गृहे अनन्तव्रतं कारितवान् । व्रतसमापनानन्तरं नागराजः पुरोहितस्य कृते पाकवस्तूनि दत्त्वा सपादरूप्यकमितया दक्षिणया युक्तं ताम्बूलं च दत्त्वा नमस्कृतवान् ।

अल्पां दक्षिणां दृष्ट्वा अनन्तरामशास्त्री खेदमिश्रितस्वरेण - "नागराजवर्य ! दश रूप्यकाणि दीयन्ते चेत् गोदानस्य यत् फलं तत् प्राप्यते भवता । एतादृशी अल्पा दक्षिणा तु फलदायिनी न । प्रसिद्धस्य वणिजः भवतः स्तरानुगुणा अपि न" इति उक्तवान् ।

तदा नागराजः हसन् - "शास्त्रिवर्य ! पितामहस्य कालात् एव मम गृहे व्रताचरणं प्रचलति । प्रतिवर्षम् अपि सा एव पूजा, सा एव कथा । अतः दक्षिणा अपि पूर्वं यावती दीयते स्म तावती एव दत्ता मया । परम्परागतः क्रमः एव मया अनुसृतः दक्षिणादाने अपि" इति उक्तवान् ।

प्रतिवचनं किमपि वक्तुम् अशक्नुवन् अनन्तरामशास्त्री मौनं स्वगृहं प्रति प्रस्थितवान् । एवं गमनसमये स्वस्य गृहस्य पुरतः उपविष्टः गोपालः तं दृष्टवान् । सः चिन्ताक्रान्तम् अनन्तरामशास्त्रिणं दृष्ट्वा समीपम् आगत्य- "कुतः आगमनम् आर्यस्य ?" इति पृष्टवान् ।

"नागराजश्रेष्ठनः गृहं गत्वा अनन्तव्रतं कारयित्वा आगच्छन् अस्मि भोः" इति निरुत्साहेन खेदमिश्रितस्वरेण उक्तवान् अनन्तरामशास्त्री ।

'भामहः'

शास्त्रिणः मुखस्य म्लानतां, वचनस्य निरुत्साहितां च दृष्ट्वा पृष्टवान् गोपालः - "नागराजश्रेष्ठी तु एषु दिनेषु प्रभूतं लाभं सम्पादयन् अस्ति । तथापि पर्याप्तमात्रेण दक्षिणां न दत्तवान् वा सः ?" इति ।

"हुं । स तु कृपणचक्रवर्ती" इति वदन् अनन्तरामशास्त्री नागराजश्रेष्ठिना अल्पा दक्षिणा दत्ता यत् तत् निवेद्य, तेन यत् उक्तं तदपि निवेदितवान् ।

सर्वं श्रुत्वा गोपालः उच्चैः हसन् - "पारम्पर्यप्रेमी सः स्वस्य पितामहस्य काले यत् मूल्यम् आसीत् तेन एव मूल्येन वस्तूनां विक्रयणं तु न करोति खलु ? पूर्वजानां काले सपादैकरूप्यकेण गोणीपरिमितः तण्डुलः प्राप्यते स्म । तावतः एव तण्डुलस्य मूल्यम् इदानीं शतं रूप्यकाणि । भवतः पूर्वजाः सपादैकरूप्यकदक्षिणां प्राप्य अनन्तव्रतं कारितवन्तः आसन् इति तु सत्यम् एव । किन्तु इदानीं कालः परिवृत्तः अस्ति । एषः अंशः उपायेन ज्ञापनीयः । अतः भवता एवं करणीयम् ..." इति वदन् अनन्तरामशास्त्रिणम् एकम् उपायम् उक्तवान् ।

पुरोहितः सन्तोषेण तस्मिन् दिने एव सायङ्काले नागराजस्य आपणं गत्वा तण्डुलं स्वीकृत्य सपादैकरूप्यकं दत्तवान् । एतत् दृष्ट्वा नागराजः आश्चर्येण - "एतत् किम् ?" इति पृष्टवान् ।

तदा पुरोहितः– "अये श्रेष्ठिवर्य ! पारम्पर्येण अनन्तव्रतं कारयता भवता तावती एव दक्षिणा दत्ता, यावती दक्षिणा पूर्वजैः दीयते स्म । अतः अहम् अपि



पारम्पर्यम् अनुसरन् पितामहादिभिः सपादैकरूप्यकमूल्येन यावान् तण्डुलः नीयते स्म तावन्तम् एव तण्डुलं नयन् अस्मि" इति उक्तवान् ।

प्रवर्तमानं वार्तालापं श्रुत्वा तत्र विद्यमानाः सर्वे जनाः हसितवन्तः । नागराजः लज्जया शिरः अवनमितवान् ।

एतत् सर्वं गोपालस्य एव बुद्धिमत्ततायाः फलम् इति ग्रामजनाः सर्वे ज्ञातवन्तः । ततः आरभ्य ते गोपालं महाबुद्धिमन्तं व्यवहारकुशलं च भावितवन्तः ।

जनाः बहवः तस्य मुखस्तुतिम् अपि कुर्वन्ति स्म । तत् श्रुत्वा गोपालः वदति स्म - "ये अस्मान् वञ्चयन्ति ते अपि उपायेन वञ्चनीयाः । शठं प्रति शाठ्यम् एव आचरणीयम् । तदर्थं महत् कौशलम्



अपेक्षितम् । अहं तु मम मत्यनुगुणं व्यवहृतवान् । किञ्चित् साफल्यं च प्राप्तवान् । एतद्विषये अहं सुनिपुणः इति न। अनुभवबलात् चिन्तनबलात् च यत्किञ्चित् करोमि, तावत् एव'' इति ।

अनन्तरकाले अपि गोपालेन उक्ताः द्वित्राः उपायाः फलिताः अभवन् । अतः यः कोऽपि यदा समस्याम् अनुभवति स्म तदा जनाः तं वदन्ति स्म - ''भवान् गोपालं पृच्छतु । सः कमपि उपायं वदेत्'' इति ।

अथ कदाचित् शारदा नाम काचित् विधवा द्वाभ्यां पुत्रीभ्यां सह गविपुरम् आगतवती । पत्युः मरणानन्तरं स्वस्य अग्रजस्य गृहे आसीत् सा । परन्तु प्रजावती- ''वराकाः निर्गतिकाः सर्वे अत्र आगत्य भोजनं कुर्वन्ति'' इति सर्वदा कटुवचनैः तां निन्दति स्म । तानि वचनानि श्रोतुम् अशक्ता सा स्वपुत्रीभ्यां सह गविपुरम् आगत्य एकस्मिन् भाटकगृहे वासं कुर्वती एकं लघु उपाहारमन्दिरम् आरब्धवती । तं ग्रामं परितः ये जनाः वसन्ति स्म ते सर्वे यदा विपणिम् आगच्छन्ति स्म, तदा एतस्याः उपाहारमन्दिरे एव भोजनादिकं कृत्वा गच्छन्ति स्म ।

गविपुरे एव कृष्णनामकस्य कस्यचित् उपाहारगृहम् अपि आसीत् । शारदायाः उपाहारगृहस्य कारणात् कृष्णस्य ग्राहकाः न्यूनाः अभवन् । एतस्मात् खिन्नः सः द्वयोः दुष्टयोः कृते धनं दत्त्वा - 'तस्याः उपाहारगृहस्य अपख्यातिः करणीया' इति उक्त्वा प्रेषितवान् ।

तौ द्वौ अपि तस्याः उपाहारगृहम् आगतवन्तौ । खादनसमये आनीतं तैलपं व्यञ्जने सारे च स्थापयित्वा - ''एतत् किम् ? अन्नस्य विक्रयणमेव पापकार्यम् । एवं स्थिते भोजने तैलपः अपि अस्ति ! एतादृशं भोजनं सज्जीक्रियते चेत् भवती रौरवनरकं गमिष्यति'' इति उच्चैः कोलाहलं कृत्वा ततः गतवन्तौ । एतस्मात् प्रकरणात् तत्र ये भोजनं कुर्वन्तः आसन् ते सर्वे शारदां सम्यक् तर्जितवन्तः ।

तदनन्तरम् अपि कृष्णः दुष्टान् प्रेषयित्वा तस्याः उपाहारगृहे द्वित्रवारं कोलाहलं कारितवान् । एकस्मिन् दिने तत्र अन्ने अस्थिखण्डाः दृश्यन्ते स्म, अपरस्मिन् दिने शाकाहारे मांसस्य खण्डाः मीनखण्डाः वा दृश्यन्ते स्म । अतः तत् उपाहारगृहं प्रति आगन्तॄणां सङ्ख्या न्यूना जाता ।

'ये मां द्विषन्ति ते एव एतत् सर्वं कारयन्तः सन्ति' इति शारदा चिन्तितवती । अन्ते गोपालस्य समीपं गत्वा प्रवृत्तं सर्वं निवेद्य 'कमपि परिहारं सूचयतु कृपया' इति प्रार्थितवती सा ।

सर्वं श्रुत्वा क्षणकालं विचिन्त्य गोपालः - 'भिक्षुकस्य भिक्षुकः एव यथा शत्रुः तथैव वणिजः वणिक् एव शत्रुः । कृष्णस्य दुर्बुद्धिः एव एतस्य कारणं स्यात् । सः एव एतादृशं कार्यं कारयन् अस्ति' इति निर्णीय शारदाम् उद्दिश्य - ''भवती एकं कार्यं करोतु । पुरातनमण्डपे रुद्रः नाम कश्चन तरुणः वसति । सः महान् बलशाली । किन्तु सः अनाथः । अन्येषां गृहेषु कार्यं कृत्वा जीवनं यापयति सः । भवती तस्मै किञ्चित् धनं, योग्यं भोजनं च ददातु । सः भवत्याः रक्षकः भविष्यति'' इति सूचितवान् ।

एतत् अङ्गीकृत्य शारदा रुद्रस्य समीपं गत्वा - ''मम पुत्रः नास्ति । अतः सर्वे माम् उपहसन्ति । दुष्टजनाः मम उपाहारगृहस्य अपख्यातिं कुर्वन्तः सन्ति अपि । सज्जीकृते पाकपदार्थे मलिनवस्तूनि आनीय स्थापयन्ति ते । भवान् मया सह आगच्छतु । विना शुल्कं भोजनं, अल्पं धनं च दास्यामि भवते'' इति उक्तवती ।

रुद्रः प्रथमं शारदायाः वचनं न श्रुतवान्, न वा विश्वसितवान् । किन्तु अनन्तरकाले 'एषः गोपालेन सूचितः उपायः' इति यदा सः ज्ञातवान् तदा - 'अत्र मम किमपि आनुकूल्यं स्यात्' इति चिन्तयित्वा शारदायाः प्रस्तावम् अङ्गीकृतवान् सः ।



अनन्तरं रुद्रः शारदायाः गृहे वासम् आरब्धवान् । तत्र भोजनं कुर्वन् कार्ये अपि साहाय्यं करोति स्म सः । शारदायाः ज्येष्ठा पुत्री सुगुणा सुन्दरी आसीत् । रुद्रः तस्याम् अनुरक्तः जातः । सा अपि एतम् इष्टवती ।

'अनाथः अहं शारदायाः रक्षकः भवामि चेत् अग्रे कदाचित् तस्याः जामाता भवेयम् । एतत् सर्वं विचिन्त्य एव गोपालः मम अत्र आनयनं सूचितवान् स्यात्' इति चिन्तितवान् रुद्रः ।

कानिचन दिनानि अतीतानि । अथ कदाचित् दुष्टाः यथापूर्वम् आगत्य शारदायाः उपाहारगृहे व्यञ्जने शिलाखण्डान् स्थापयित्वा कोलाहलम् आरब्धवन्तः । सर्वं पश्यन् स्थितः रुद्रः तान् गृहीत्वा सम्यक् ताडितवान्, उक्तवान् च - ''एतादृशं

द्रोहकार्यं कर्तुं कः भवतः प्रेषितवान् ? सत्यं वदन्तु । नो चेत् भवतां चर्म निष्कासयिष्यामि'' इति । रुद्रस्य कोपयुक्तं वचनं श्रुत्वा व्यवहारं च दृष्ट्वा भीताः ते 'अस्मान् कृष्णः प्रेषितवान्' इति वस्तुस्थितिम् उक्तवन्तः ।

तत्क्षणे एव विद्यमानेषु केचन ज्येष्ठाः कृष्णं गोपालस्य समीपं नीतवन्तः । गोपालस्य विचारणात् पूर्वमेव कृष्णः रुदन् - ''गोपालवर्य ! रुद्रः शारदायाः उपाहारगृहे कार्यं करोति यत् तत्र भवान् एव कारणीभूतः इति इदानीम् अहं ज्ञातवान् । मम वाणिज्ये आयः न्यूनः जातः । एतस्मात् कारणात् द्वेषेण अहमेव तान् दुष्टान् प्रेषितवान् । भवान् एतदर्थं यत्किमपि दण्डनं ददातु । अहं स्वीकर्तुं सिद्धः अस्मि'' इति उक्तवान् ।

तदा कृष्णः - ''दण्डनं दातुम् अहं ग्रामाधिकारी न । एकं विषयं जानातु । अन्येषाम् अपकारः क्रियते चेत् देवः अपि क्षमां न करोति । वयम् अन्येषां शुभम् इच्छामः चेत् अस्माकम् अपि शुभं भवति । इदानीं जातं सर्वं दृष्ट्वा ग्रामजनाः भवन्तं दुष्टजनेषु अन्यतमं वदिष्यन्ति । तत्कारणतः इदानीं यः लाभः भवता प्राप्यमाणः अस्ति सः अपि इतःपरं न भवेत् भवतः । एषा हानेः आपत्तिः निवारणीया चेत् मया यथा उच्यते तथा करोतु भवान् । शारदायाः द्वितीयां पुत्रीं भवतः पुत्राय आनयतु । 'जनानां मध्ये ये कार्यं कुर्वन्ति तैः कथं अपायाः सम्मुखीकरणीयाः भवन्ति इत्यंशं ज्ञापयितुम् एव एतादृशं कार्यम् अहं कृतवान्' इति तां वदतु । अनन्तरं सर्वं शुभं भविष्यति'' इति उक्तवान् ।

कृष्णः गोपालस्य वचनानुसारं कार्यं कृतवान् । गोपालस्य उपायस्य परिणामतः विना व्ययेन, श्रमेण च शारदायाः द्वयोः पुत्र्योः विवाहः सम्पन्नः । रुद्रः प्रथमां पुत्रीं परिणीतवान् । तस्याः साहाय्येन उपाहार-गृहस्य कार्यं निर्वहन् शारदायै सम्पूर्णविश्रान्तिं दत्तवान् सः ।

कृष्णस्य अपि स्नुषा आगता । तथैव मानः अपि रक्षितः अभवत् । 'एतस्य सर्वस्य कारणं गोपालस्य उपायः एव' इति वदन्तः ग्रामजनाः गोपालं बहुधा श्लाघितवन्तः ।





# अल्पमूल्येन ....

वेलापुरग्रामस्य ग्रामलिपिकारः श्यामः कदाचित् स्वगृहस्य पुरतः उपविश्य गणनाकार्ये मग्नः आसीत् । तदा तत्र आगता तदीया पत्नी सुशीला पतिम् उद्दिश्य - ''पुत्र्याः गृहे प्रचलिष्यमाणे कार्यक्रमे भागं वोढुम् अस्माभिः शिवपुरग्रामः गन्तव्यः इति स्मरति खलु भवान् ? सायङ्काले एव प्रस्थानम् । तत्र वितरणार्थं मिष्टान्नानि आनेतव्यानि इति स्मरति खलु ?'' इति उक्तवती ।

''इदानीम् एव व्यवस्थां चिन्तयिष्यामि'' इति वदन् अवधानपूर्वकं गणनाम् आरब्धवान् श्यामः । मध्ये मध्ये मार्गे गमनागमनकर्तृणां विषये अपि तस्य दृष्टिः आसीत् एव ।

तावता रामनामकः कश्चित् सामान्यः कृषकः तेन मार्गेण आगतवान् । श्यामः तम् आहूय मन्दस्वरेण कर्णे किमपि उक्त्वा तं प्रेषितवान् । किञ्चित्समयानन्तरं तेन एव मार्गेण भीमः आगतवान् । तम् अपि किमपि उक्त्वा प्रेषितवान् श्यामः ।

''गणनाकार्ये मग्नः भवान् मिष्टान्नस्य विषयं विस्मृतवान् इति भाति'' इति वदन्ती पुनः बहिः आगतवती सुशीला ।

''न भोः ! तदेव कार्यं कुर्वन् अस्मि'' इति वदन्तं पतिं संशयदृष्ट्या पश्यन्ती अन्तः गतवती सुशीला ।

अनन्तरमपि मार्गे गच्छन्तौ अपरौ द्वौ आहूय किमपि उक्त्वा प्रेषितवान् श्यामः ।

एतत् सर्वं परिशीलयन्ती आसीत् सुशीला । पुनः सा बहिः आगत्य पतिम् उद्दिश्य - ''मार्गे गच्छतः जनान् आहूय सम्भाषणं कर्तुं भवतः समयः अस्ति । मया उक्तस्य मिष्टान्नस्य आनयनस्य विषयः एव उपेक्षितः भवता'' इति कठोरस्वरेण उक्तवती ।

''भवती पश्यन्ती एव अस्ति खलु ? मया प्रेषिताः चत्वारः अपि एतस्य कार्यस्य साहाय्यार्थम् एव गतवन्तः सन्ति'' इति हसन् उक्तवान् श्यामः।

''किं भोः ! मां मूर्खां भावयति वा भवान् ? मिष्टान्नस्य आनयनार्थं चत्वारः किमर्थम् ? एकः एव पर्याप्तः खलु ? अतः यावत् भवान् कञ्चित् न प्रेषयति तावत् अहम् अत्र एव उपविशामि'' इति दृढस्वरेण उक्तवती सुशीला ।

तदा श्यामः - ''झटिति क्रेतुं वयं सिद्धाः चेदपि विक्रेतुम् आपणिकः चन्द्रः सिद्धः नास्ति इत्येव समस्या'' इति हसन् उक्तवान् ।

पत्युः वचनं श्रुत्वा सुशीला - ''एतत् तु अतीव विचित्रम् इव दृश्यते । आपणिकः केदारं वा गृहं वा न विक्रीणीते खलु । आपणः वाणिज्यार्थं खलु चाल्यते ? विक्रयणार्थं सः सिद्धः नास्ति इत्यस्य कः अर्थः ?'' इति कोपेन पृष्टवती ।

तदा श्यामः - ''शृणोतु तावत् । ह्यः एव चन्द्रस्य आपणं गतवान् आसम् अहम् । मूल्यं विचार्य आगतवान् अस्मि । किलोमितस्य मिष्टान्नस्य मूल्यं विंशतिः रूप्यकाणि इति उक्तवान् सः । मूल्यं सर्वथा न न्यूनीकुर्यात् सः । मिष्टन्नानि तु उत्तमानि प्रत्यग्राणि च सन्ति । अतः मूल्यं न्यूनीकर्तुं मया कश्चन उपायः आश्रितः अस्ति । मया प्रेषिताः चत्वारः अपि आपणं गत्वा मूल्यं विचार्य रुचिम् आस्वादयन्ति । ततः 'पिष्टं प्राचीनं', 'घृतस्य गन्धः सम्यक् नास्ति' 'शर्करा अधिका' इत्यादिकानि कारणानि वदन्तः ते तानि न क्रीणन्ति । बहवः एवं वदन्ति इति कारणतः - 'कुत्रापि निर्माण-समये लोपः जातः स्यात्' इति चिन्तयन् चन्द्रः मूल्यं न्यूनीकुर्यात् एव । 'यदा मूल्यं न्यूनीक्रियते तदा क्रेतव्यम्' इति मया कश्चित् सूचितः अस्ति'' इति उक्तवान् ।

तावता भीमः स्यूतपरिमितानि मिष्टान्नानि आनीय यच्छन् - ''स्वामिन्, यथा भवता उक्तम् आसीत् तथैव मूल्यं न्यूनीकृतम् अस्ति आपणिकेन । मिष्टान्नानां मूल्यम् अद्य दश रूप्यकाणि एव'' इति सहर्षम् उक्तवान् ।

पत्युः बुद्धिमत्तां दृष्ट्वा आश्चर्यचकिता सुशीला पतिं साभिमानं दृष्टवती ।





# सम्राट् अशोकः

## २

[चाणक्यस्य साहाय्येन चन्द्रगुप्तः मगधदेशस्य राजा सन् मौर्यवंशाधिपत्यम् आरब्धवान् । चन्द्रगुप्तस्य दिवङ्गतेः अनन्तरं तदीयः पुत्रः बिन्दुसारः राजा जातः । कदाचित् कश्चन निर्धनः ब्राह्मणः सुभद्रानामिकया स्वपुत्र्या सह आगत्य - 'एषा महाराज्ञी भविष्यति इति ज्योतिषिकैः उक्तम् अस्ति' इति उक्त्वा पुत्रीं राज्ञे समर्प्य - 'एषा भवता परिणेतव्या' इति प्रार्थितवान् । यद्यपि राजा तस्मिन् क्षणे एतं प्रस्तावम् अङ्गीकृतवान्, तथापि राज्यव्यवहारे निमग्नः सः एतं विषयं विस्मृतवान् एव । वर्षद्वयानन्तरं कथञ्चित् तेन एषः विषयः स्मृतः । तत्क्षणे एव सः सङ्कल्पितवान् यत् सूर्यास्तात् पूर्वम् एव मया एषा परिणेतव्या इति । तदनन्तरम् ---]

राजाज्ञाम् अनुसरन्तः भटाः - 'राजा सुभद्रां परिणेष्यति' इति वार्तां राज्ये सर्वत्र प्रसारितवन्तः । पाटलीपुत्रस्य मार्गाः कदलीवृक्षैः, आम्रतोरणैः, विविधवर्णीयैः पुष्पैः, रङ्गवल्लीभिः च विशेषतः अलङ्कृताः ।

पुत्री कथम् अस्ति इति द्रष्टुम् इच्छन् सुभद्रायाः पिता तस्मिन् दिने सौभाग्यवशात् राजधानीम् आगतवान् आसीत् । आगमनसमनन्तरम् एव तेन विवाहवार्ता श्रुता । विवाहसन्नाहः च दृष्टः । एतत्सर्वं दृष्ट्वा सः नितरां सन्तुष्टः । वस्तुतः तु तम् आनेतुम् एव राजभटाः तदीयं ग्रामं प्रति प्रस्थिताः आसन् । राजधान्याम् एव तं दृष्ट्वा ते महता आदरेण तं राजभवनं नीतवन्तः । आस्थानज्योतिषिकैः निर्दिष्टे मुहूर्ते वाद्यघोष-वेदघोष-पुरस्सरं सुभद्रा-बिन्दुसारयोः विवाहः महता वैभवेन प्रवृत्तः ।

' चन्दमामा'



वर्षद्वयं यावत् या सुभद्रा राजभवने परिचारिकाजीवनं यापितवती आसीत्, सा एव सर्वालङ्कारभूषिता महाराज्ञी जाता अस्ति । तस्याः इष्टानिष्टादीनां परिपालनार्थं बह्व्यः परिचारिकाः सन्ति इदानीम् । तस्याः वासार्थम् एव विशालम् एकं भवनं सज्जीकृतम् अस्ति अपि ।

सुखसन्तोषादीनां प्राप्त्या तस्याः जीवनं सुखमयं भवेत् एव खलु ? किन्तु सुभद्रायाः जीवनं तथा न जातम् । पदे पदे अन्याः राज्ञ्यः कटुवचनैः तां बहुधा खेदयन्ति स्म । 'अहो, भिक्षुकस्य पत्नी महाराज्ञी जाता अस्ति !' इति काचित् वदति चेत् अन्या वदति स्म - 'निर्धनब्राह्मणपुत्री अपि एवं महाराज्ञीपदवीं प्राप्तुं यदि अर्हेत् तर्हि किम् अस्माकं राजकुलजन्मना ? काचः कदापि काञ्चनं भवितुं न अर्हति' इति ।

'अन्यानुग्रहात् प्राप्तं सौभाग्यं चिरकालं न तिष्ठेत् । यस्यां योग्यता नास्ति सा कियच्चिरं वा एवं महाराज्ञी इव व्यवहरेत् ? सर्वं क्षणिकम्' इति वदति स्म अपरा । एतादृशानि वचनानि उक्त्वा तिस्रः अपि उपहासपूर्वकं हसन्ति स्म ।

एतादृशानि असूयापूर्णानि उपहासवचनानि सुभद्रां खेदयन्ति स्म पुनः पुनः । तथापि सा सर्वं मौनं सहते स्म । महाराजं तु किमपि न वदति स्म सा । यतः तादृशः साधुस्वभावः आसीत् तस्याः । राजा तु सर्वदा शासनव्यवहारे एव निरतः भवति स्म । अतः अन्तःपुरस्य व्यवहारादीनां विषये अवधानं दातुं न शक्नोति स्म सः ।

सुभद्रायां प्रीतिमती काचित् वृद्धा परिचारिका एकान्ते अश्रूणि स्रावयन्तीं सुभद्राम् उद्दिश्य - ''आर्ये, असूयाग्रस्ताः ताः तथा व्यवहरन्ति । एतत्सर्वं स्मरन्त्या भवत्या एवं दुःखं न अनुभोक्तव्यम् । यथा ताः तथैव भवती अपि राज्ञा यथाविधि परिणीता । अतः तासां यावान् अधिकारः अत्र अस्ति तावान् भवत्याः अपि अस्ति एव । अतः अलं चिन्तया'' इति सान्त्वनवचनानि वदति स्म ।

एतादृशवचनानि श्रुत्वा सुभद्रा मन्दहासं प्रकटयति स्म । तस्याः हासे सन्तोषः यावान् भवति स्म ततोऽप्यधिकं दुःखं भवति स्म ।

एवम् एव पुनरपि एकं वर्षम् अतीतम् । गर्भवती सुभद्रा नवमासानन्तरं एकं पुत्रं प्रसूतवती । 'वत्स ! मां शोकसागरात् उद्धर्तुम् आगतः देवदूतः भवान् । अशोकः



भवान्' इति वदन्ती तं प्रीत्या आलिङ्गति स्म सुभद्रा । 'अशोकः' इत्येव तस्य नाम निश्चितम् अभवत् ।

अशोकस्य जन्मतः पूर्वम् एव ज्येष्ठाभिः तिसृभिः राज्ञीभिः पञ्च पुत्राः प्राप्ताः आसन् । तेषु सुषेणः एव ज्येष्ठः । सर्वे तम् एव युवराजं भावयन्ति स्म । अधिकारिणः सर्वे तं महता आदरेण पश्यन्ति स्म । अतः तस्मिन् विशेषाहङ्कारः दृश्यते स्म । 'मया यथा उच्यते तथैव प्रवर्तेत सर्वम् अपि' इति सः इच्छति स्म । स्वस्य इच्छायाः अनुगुणं व्यवहारम् अकुर्वतः सेवकान् कठोरं दण्डयति स्म अपि सः । 'एषः एव भावी राजा' इति भावयन्तः सर्वे तस्य दौष्ट्यं मौनेन सहन्ते स्म ।

सुषेणः अशोकात् त्रिभिः वर्षैः ज्येष्ठः । राजपुत्राः सर्वे प्राप्तवयस्काः जाताः । कदाचित् यदा ते उद्याने विहरन्तः आसन् तदा कश्चन सेवकः आगत्य अशोकं नमस्कृतवान् । तावता तत्र आगतः सुषेणः तं बलात् ताडयित्वा पातयन् क्रोधेन - 'अये, माम् अपमानयति वा भवान् !' इति गर्जितवान् ।

सः सेवकः मन्दम् उत्थाय - ''मया भवतः अपमाननं न कृतं खलु !'' इति उक्तवान् ।

''माम् आदौ अनमस्कृत्य एतं भिक्षुकीपुत्रं नमस्कृतवान् खलु भवान् ! किम् एतत् मम अपमानकरं न ?'' इति कोपेन उक्तवान् सुषेणः ।

''अग्रज ! वचनानि अतिमर्यादानि मा भवन्तु । यथा भवतः माता मम पूज्या तथैव मम माता अपि भवता आदरेण द्रष्टव्या । मातरि अनादरवचनं न शोभते'' इति शान्तस्वरेण उक्तवान् अशोकः ।

''हुम्, अलं दुर्वचनेन । भिक्षुककुले जातां राजकुमारः अहं कदापि आदरेण न पश्यामि । हंसीनां मध्ये स्थिता बकी इव अस्ति भवतः माता '' इति उपहासमिश्रितेन स्वरेण उक्तवान् सुषेणः ।

''भ्रातः ! आवाम् उभौ अपि बिन्दुसारस्य पुत्रौ । यथा भवतः माता तथैव मम माता अपि राज्ञा विधिवत् परिणीता । मम मातुः अपमाननं कृतं चेत् पितुः अपि अपमाननं कृतम् इव । एतत् अहं सर्वथा न सहे'' इति शान्ततया दृढस्वरेण उक्तवान् अशोकः ।

''भवतः, भवन्मातुः च अपमाननात्

एव विशेषतृप्तिः मम । एतस्मात् अहं कदापि न विरमामि ;। मां किं वा कुर्यात् भवान् ?'' इति गर्वेण पृष्टवान् सुषेणः ।

''कृतस्य अपराधस्य विषये भवान् क्षमां यथा प्रार्थयेत् तथा करिष्यामि अहम्'' इति वदन् किञ्चित् अग्रे गत्वा सुषेणस्य हस्तं गृहीत्वा निष्पीडयन् उन्नीतवान् अशोकः ।

तदा वेदनाम् असहमानः सुषेणः उच्चैः आक्रन्दनं कृतवान् । तथापि अशोकः स्वस्य ग्रहणं न शिथिलीकृतवान् । सेवकः धावन् उद्यानात् बहिः गत्वा समीपे स्थितं मन्त्रिणं सर्वं निवेदितवान् ।

मन्त्री अशोकसमीपम् आगत्य - ''कृपया तं त्यजतु'' इति आज्ञामिश्रित-स्वरेण प्रार्थितवान् ।

अशोकः विना वचनं सुषेणस्य हस्तं त्यक्त्वा पार्श्वे स्थितवान् ।

''अग्रजस्य एवं पीडनं किम् उचितम् ?'' इति अशोकं पृष्टवान् मन्त्री ।

''एषः अग्रजः इव न व्यवहृतवान् । प्रत्युत अविवेकी शत्रुः इव व्यवहृतवान् । मातुः पितुः वा अवमाननम् अहं कदापि न सहे । इतःपरम् एषः एवं यदि व्यवहरेत् तर्हि हस्तं न, कण्ठं निपीडयिष्यामि'' इति कोपेन उक्तवान् अशोकः ।

सुषेणः अशोकं क्रोधेन सकृत् दृष्ट्वा शरवेगेन ततः निर्गतवान् । एतस्य दर्शनात् मन्त्रिणः मनसि अभासत यत् एषः अग्रे कदाचित् वा अशोकस्य विषये प्रतीकारं साधयितुं प्रयत्नं कुर्यात् इति ।

नन्दानां पराजये मौर्यवंशस्थापने च यः चन्द्रगुप्तस्य साहाय्यं कृतवान् आसीत् सः चाणक्यः बिन्दुसारस्य अपि प्रधान-मार्गदर्शकः आसीत् । राजकुमारयोः मध्ये यत् वैषम्यं प्रवर्धमानम् अस्ति तत् मन्त्री कदाचित् चाणक्यं विस्तरेण निवेदितवान् ।





''आत्मीयानां बन्धुमित्राणां प्रशंसा-प्रवृत्तेः कारणतः एव सुषेणः अमार्गे गच्छन् अस्ति । अशोकः तु इतोऽपि अल्प-वयस्कः । योग्यः सहवासः प्राप्तः चेत् सः उत्तमः भवेत् । दुष्टसहवासात् दुष्टः अपि भवेत् कदाचित् । परिसरस्य प्रभावतः प्रचलिष्यति सर्वम् अपि'' इति गाम्भीर्येण उक्तवान् चाणक्यः ।

''भवदुक्तं युक्तम् एव । किन्तु मम तु भाति यत् महाराजः सुषेणपक्षपाती एव अस्ति इति । अहङ्कारी यदि राजा भवेत् तर्हि मौर्यसाम्राज्यस्य हानिः एव सम्भवेत् इति भाति मम'' इति उक्तवान् मन्त्री ।

चाणक्यः क्षणकालस्य मौनस्य अनन्तरं - ''ज्येष्ठपुत्रविषये महाराजस्य यः भ्रमः अस्ति सः आदौ निवारणीयः'' इति उक्तवान् । मन्त्री चाणक्यं नमस्कृत्य ततः निर्गतवान् ।

कदाचित् राजा चन्द्रशालायाम् आसीत् । तदा चाणक्यः तत्र आगतवान् । बिन्दुसारः आदरेण तं नमस्कृत्य उक्तवान् - ''आर्य ! यदि भवान् भटद्वारा वार्तां प्रेषयेत् तर्हि अहम् एव भवद्दर्शनार्थम् उपस्थितः भवेयम्'' इति ।

''भवत्पुत्रेषु मौर्यसिंहासनम् आरोढुं समर्थस्य उत्तराधिकारिणः चयनार्थं कालः सम्प्राप्तः अस्ति । एतस्य अंशस्य स्मारणं मम कर्तव्यम् इत्यतः अहम् अत्र आगतः'' इति उक्तवान् चाणक्यः ।

एतत् श्रुत्वा महता आश्चर्येण पृष्टवान् राजा - ''किं मम ज्येष्ठपुत्रः युवराजः सुषेणः मौर्यसिंहासनस्य विभूषणे समर्थः नास्ति ?'' इति ।

''ज्येष्ठकुमारः एव सिंहासनस्य उत्तराधिकारी भवेत् इति तु परम्परागतः क्रमः । किन्तु सर्वदा एषः अनुसर्तुं न शक्यः । दक्षः एव कदाचित् सिंहासने उपवेशनीयः भवति । तेनैव राज्यस्य हितं सिद्ध्येत्'' इति उक्तवान् चाणक्यः ।

'मितभाषी चाणक्यः यत् वदति तत् विचिन्त्य एव वदति' इति बिन्दुसारः जानाति स्म । ज्येष्ठपुत्रस्य सिंहासनारोपणे काचित् विप्रतिपत्तिः स्यात् इत्यतः एव चाणक्यः एवं वदन् अस्ति इति अवगतवान् बिन्दुसारः ।

''राजन् ! एतद्विषये त्वरा प्रदर्शनीया नास्ति । राज्यस्य सिंहासनं कस्मै अर्पणीयम् इति न निर्णीतम् इति राजकुमारान् उक्त्वा

एतदर्थं वयं सर्वेषां व्यवहारं सुसूक्ष्मं परिशीलयन्तः स्मः इति सूचयतु । 'ज्येष्ठत्वकारणतः अहम् एव सिंहासनस्य उत्तराधिकारी अस्मि' इति चिन्तयन् स्यात् सुषेणः । तस्य मनस्तः एषः भावः आदौ अपसारणीयः । परीक्षाः आयोज्य राजकुमाराणां शक्ति-बुद्धि-विवेकादीनि ज्ञातव्यानि'' इति उक्तवान् चाणक्यः ।

''महात्मन् ! पूज्यः भवान् यथा चिन्तयति तथैव प्रचलतु । अद्यैव राजकुमाराणां परीक्षा क्रियते चेदपि न तत्र आक्षेपः मम'' इति उक्तवान् बिन्दुसारः ।

''राजकुमाराणां परीक्षाविषये अपि चिन्तितं मया । श्वः सूर्योदयाभ्यन्तरे भवतः षड् अपि पुत्राः नगरस्य उत्तरदिशि स्थितस्य देवालयस्य समीपम् आगच्छन्तु । आगमनात् पूर्वं ते बलवर्धकम् आहारं संसेव्य इष्टतमम् उत्तमं वाहनम् आरुह्य आगच्छन्तु । आगत्य देवालयस्य प्राङ्गणे उत्तमे आसने तैः उपवेष्टव्यम् । एतान् अंशान् एकैकम् अपि पृथक् पृथक् सूचयतु भवान्'' इति उक्त्वा ततः निर्गतवान् चाणक्यः ।

चाणक्यस्य वचनस्य अनुगुणं पुत्रान् विषयं सूचितवान् बिन्दुसारः ।

अनन्तरदिने सूर्योदयात् पूर्वं राजा बिन्दुसारः, चाणक्यः, मन्त्रिणः, केचन प्रमुखाः अधिकारिणः च शिवालयस्य प्राङ्गणे सम्मिलिताः । सूर्योदयः यदा आसन्नः तदा राजकुमाराः एकैकशः तत्र आगताः ।

युवराजः सुषेणः अश्वयुगलेन उह्यमाने



सुन्दरे रथे उपविश्य आगतवान् । द्वितीयः अलङ्कृतं गजम् आरुह्य आगतवान् । तृतीयः बलवन्तम् अश्वम् आरुह्य आगतवान् । चतुर्थः पञ्चमः च रमणीयायां शिबिकायाम् उपविश्य आगतवन्तौ । अन्ते अशोकः आगतवान् । सः किमपि वाहनं न आरूढवान् आसीत्, प्रत्युत पादाभ्यां चलन् समये तत्र उपस्थितः आसीत् ।

आलयमण्डपे राजभटाः राजकुमाराणाम् अपेक्षायाः अनुगुणम् आसनव्यवस्थां कृतवन्तः । उभौ राजकुमारौ आगमनसमये दन्तनिर्मितं सिंहासनम् एव आनीतवन्तौ आस्ताम् । तस्मिन् उपविष्टवन्तौ तौ । अन्यौ मृदुले तल्पे उपविष्टवन्तौ । अपरः उत्कृष्टे आसने उपविष्टवान् । अशोकः तु आसनं किमपि अनपेक्षमाणः स्वच्छायां भूमौ

उपविष्टवान् ।

अशोकस्य व्यवहारं पश्यन्तः अन्ये राजकुमाराः परस्परमुखं पश्यन्तः उपहसितवन्तः । अशोकस्य व्यवहारः राज्ञि अपि आश्चर्यम् अजनयत् ।

चाणक्यः राजकुमाराणां समीपम् आगत्य पृष्टवान् - ''भवतां वाहनस्य आसनस्य च विषये अस्माभिः सर्वं प्रत्यक्षं दृष्टम् एव । आगमनात् पूर्वं केन कीदृशः आहारः सेवितः ?'' इति ।

राजकुमाराः आत्मना सेवितस्य आहारस्य विवरणं महता उत्साहेन निवेदितवन्तः ।

अन्ते चाणक्यः अशोकसमीपम् आगत्य - ''वत्स ! राजकुमारस्य भवतः बहूनि यानानि भवन्ति एव । तथापि भवान् किमर्थं तानि परित्यज्य पादाभ्याम् एव अत्र आगतवान् ?'' इति पृष्टवान् ।

''श्रीमन् ! उत्तमं वाहनम् उपयोक्तव्यम् इति खलु सूचना आसीत् ? पादौ एव उत्तमवाहनायेते । अतः अहं तयोः एव उपयोगं कुर्वन् अत्र आगतवान्'' इति उक्तवान् अशोकः ।

''भवतु नाम । आगमनात् पूर्वं भवता कीदृशः आहारः सेवितः ?'' इति पृष्टवान् चाणक्यः ।

''कस्मिन् समये किं दत्तं चेत् बलं वर्धते इति माता सम्यक् जानाति । मम प्रस्थानसमये मात्रा मह्यं दधि दत्तम् । प्रतिवचनम् अनुक्त्वा तत् संसेव्य आगतः अहम्'' इति उक्तवान् अशोकः ।

''रूक्षायां भूमौ उपविष्टवान् खलु भवान् ? किम् एतत् एव भवतः अमूल्यम् आसनम् ?'' इति पुनरपि आश्चर्येण पृष्टवान् चाणक्यः ।

''महात्मन् ! जन्मभूमिः एव खलु गरीयसी । अतः अहं तां भूमिम् एव आसनत्वेन परिकल्पितवान्'' इति उक्तवान् अशोकः ।

एतत् श्रुत्वा - ''अपूर्वाणि उत्तराणि एतानि'' इति उक्तवन्तः मन्त्रिणः अधिकारिणः च ।

चाणक्यः मन्दहासपूर्वकं - ''वत्स ! अभिनन्दनीयः भवान्'' इति वदन् प्रीत्या अशोकस्य स्कन्धे हस्तं स्थापितवान् ।

- (अनुवर्तते)





## इन्द्रजाल-गन्धर्वमाययोः भेदः

दृढव्रती त्रिविक्रमः पुनश्च वृक्षसमीपम् आगत्य वृक्षशाखायां लम्बमानं शवम् अवतार्य स्कन्धे आरोप्य यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - "राजन्, महत् कष्टं सहमानः सन् अपि तिलमात्रेण अपि विचलितः नास्ति भवान् । भवतः दर्शनेन मयि करुणा उत्पद्यते । कस्यचित् देशस्य राज्ञा सता भवता सेवकः इव परिश्रमः क्रियमाणः अस्ति खलु । निरर्थकं कार्यम् इदम् । प्रायशः काश्चित् क्षुद्रशक्तिं वशीकृत्य तद्द्वारा अन्त्यरहिताः अपूर्णाः अपेक्षाः पूरणीयाः इति भवतः इच्छा अस्ति इति भाति । किन्तु दैवीशक्तयः वशीकृताः चेत् अपि ताभिः पूर्यमाणाः अपेक्षाः तात्कालिक्यः एव । ततः प्राप्यमाणा मनश्शान्तिः अपि क्षणिका एव । अन्ते मनसः शान्तिम् एव नाशयन्ति ताः

## वेतालकथा



शक्तयः । एवं स्थिते का कथा क्षुद्रशक्तीनाम् ? एतस्य उदाहरणरूपेण जन्मना कुरूपिण्याः राजकुमार्याः कथां श्रावयामि, या च विश्वसुन्दरीत्वं प्राप्तुम् अवकाशं प्राप्य अपि तादृशस्य भाग्यस्य उपेक्षां कृतवती । तां कथां श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

पूर्वं जीमूतवर्मा नाम राजा मणिपुरं पालयन् आसीत् । सः अत्यन्तं सुन्दरः आसीत् । राज्ञी सुधावती अपि सुन्दरी एव । बहुकालं यावत् तयोः अपत्यं न आसीत् । इष्टदेवतायाः अनुग्रहेण चिरकालानन्तरं ताभ्यां पुत्री तु प्राप्ता । किन्तु सा पुत्री कुरूपिणी आसीत् ।

पुत्र्याः रूपदर्शनेन खिन्नौ राजा राज्ञी च चिन्ताक्रान्तौ जातौ । किन्तु स्वस्य अपत्ये मातापित्रोः प्रीतिः सहजा एव खलु ? तदनुगुणं राजा राज्ञी च महत्या प्रीत्या पुत्रीं पालयतः स्म । मणिमञ्जरी इति पुत्र्याः नामकरणम् अपि कृतं ताभ्याम् । एवम् एव दिनानि वर्षाणि च अतीतानि ।

यद्यपि मणिमञ्जरी कुरूपिणी आसीत्, तथापि तस्याः कण्ठः तु सुमधुरः आसीत् । यदा सा द्वादशवर्षीया जाता तदा एव सा सङ्गीतविद्यायां प्रावीण्यं सम्पादितवती आसीत् । वीणावादनमपि अभ्यस्तम् आसीत् तया । यदा सा वीणावादनं करोति स्म तदा सर्वे अपि मन्त्रमुग्धाः सन्तः गानलोके विहरन्ति स्म ।

प्रवर्धमाना मणिमञ्जरी यदा प्राप्तवयस्का जाता तदा मणिमञ्जर्याः विवाहः समस्यारूपेण परिणतः अभवत् । जीमूतवर्मा सुधावती च नितरां चिन्ताक्रान्तौ जातौ ।

'कुरूपिणीं पुत्रीं को वा राजकुमारः वृणुयात्' इत्येव तयोः चिन्ता आसीत् ।

एवं स्थिते कदाचित् पूर्णिमायाः रात्रौ मणिमञ्जरी एकाकिनी एव उद्याने अशोकवृक्षस्य अधः उपविश्य वीणां वादयन्ती गायन्ती आसीत् । तदा आकाशमार्गेण विहरन्ती आगता वेदचन्दनानामिका गन्धर्वकन्या सङ्गीतं शृण्वती मणिमञ्जरीं दृष्ट्वा उद्याने अवतीर्य युवराज्ञ्याः समीपं गत्वा - ''अद्भुतम् । अपूर्वा गानसुधा ! अस्माकं गन्धर्वलोके अपि एतावत्सुन्दरकण्ठेन कोऽपि न गायति'' इति वदन्ती मणिमञ्जरीं श्लाघितवती ।

अनिरीक्षिततया जातया एतया घटनया भ्रान्ता युवराज्ञी गीतगानं स्थगयित्वा झटिति उत्थाय महता आश्चर्येण सुवर्णप्रतिमासदृशीं गन्धर्वकन्यां निर्निमेषं पश्यन्ती स्थितवती ।

आश्चर्येण पश्यन्त्याः मणिमञ्जर्याः मनसि जायमानान् भावान् अवगतवती वेदचन्दना स्वस्य अङ्गुल्यां स्थितं प्रवालयुक्तम् अङ्गुलीयकं मणिमञ्जर्याः अङ्गुल्यां योजयन्ती - ''युवराज्ञि ! एतत् अङ्गुलीयकं महिमान्वितम् अस्ति । या एतत् अङ्गुलीयकं धरति सा इतरैः मादृशी सुन्दरी इव दृश्यमाना भवति । अतः इतःपरं भवत्या स्वकुरूपतायाः विषये चिन्तनीयं नास्ति । किन्तु भवती स्वस्य नूतनं रूपं द्रष्टुं न शक्नोति । अङ्गुलीयकं धृत्वा कदापि भवत्या मन्दिरं न गन्तव्यम् । तथा गतं चेत् अङ्गुलीयकस्य प्रभावः तेन शाश्वतरूपेण नष्टः भविष्यति'' इति उक्त्वा आकाशमार्गेण प्रतिगतवती ।

प्रवृत्तं सर्वं स्वप्ने वा ? वास्तवे वा ? इति अजानती आश्चर्यचकिता मणिमञ्जरी यावत् परितः पश्यन्ती आसीत् तावता तदीयौ मातापितरौ तत्र आगतवन्तौ । अशोकवृक्षस्य अधः स्थितां कान्त्या प्रकाशमानां युवतिं दृष्ट्वा आश्चर्यचकितौ जातौ तौ ।

अन्ते जीमूतवर्मा युवत्याः पार्श्वे विद्यमानां पुत्र्याः वीणाम् अभिज्ञाय - ''भवती का ? मम पुत्री मणिमञ्जरी कुत्र ?'' इति तां पृष्टवान् ।

मणिमञ्जरी क्षणं यावत् विचिन्त्य - ''तात ! ....'' इति वदन्ती पितरम्



आलिङ्गितवती । राजा राज्ञी च पुत्र्याः स्वरम् अभिज्ञातवन्तौ । किन्तु रूपभेदात् भ्रान्तौ तौ । किं करणीयम् इति अजानन्तौ तौ तां युवतिम् एव पश्यन्तौ स्थितवन्तौ । तदा मणिमञ्जरी देवचन्दनानामिकायाः गन्धर्वकन्यायाः मेलनं, तया कृतम् अङ्गुलीयकदानम्, अङ्गुलीयकस्य कारणतः जातं रूपपरिवर्तनं च पितरौ विस्तरेण निवेदितवती ।

'कथञ्चित् पुत्र्याः कुरूपस्य निवारणं तु जातं खलु' इति सन्तुष्टौ जीमूतवर्मा सुधावती च ।

अनन्तरदिने प्रासादे गन्धर्वकन्यायाः वेदचन्दनायाः स्वरूपेण स्थितां युवराज्ञीं दृष्ट्वा तदीयाः परिचारिकाः अत्यन्तं चकिताः अभवन् । ताः परस्परं वदन्त्यः आसन् -



''एषा सुन्दरी महाराजस्य बन्धुः स्यात् । युवतिः नाम ईदृशी स्यात् । अस्माकं युवराज्ञीं पश्यन्तु तावत् । कीदृशं कुरूपं तत् ! लवमात्रेण अपि द्वयोः साम्यं न दृश्यते'' इतिं ।

युवराज्ञी क्षणं विचिन्त्य - ''मालति, वसन्ते, नीरदे, किमर्थं तथा पश्यन्ति भवत्यः ? अत्र आगच्छन्तु तावत्'' इति उक्तवती ।

युवराज्ञ्याः ध्वनिम् अभिज्ञाय ताः अपि परिचारिकाः तस्याः समीपं गत्वा - ''क्षम्यताम् युवराज्ञि, कस्यचित् महर्षेः अनुग्रहः जातः अस्ति इति भाति । देवकन्यानां रूपम् अपि अतिशेते भवत्याः सौन्दर्यम्'' इति प्रशंसां कृतवत्यः ।

किन्तु युवराज्ञ्याः मनसि अन्यः एव कश्चन विचारः बाधते स्म । 'इतरेषां दृष्ट्या तु अहं विश्वसुन्दरी एव । किन्तु अहम् एव मम सौन्दर्यं द्रष्टुम् असमर्था अस्मि' इति खिन्ना आसीत् सा ।

एवं स्थिते कदाचित् तस्याः जन्मदिनम् आगतम् । यथापूर्वं महाराजः मनोरञ्जक-कार्यक्रमान् आयोजितवान् आसीत् । कार्यक्रमस्य अन्ते कश्चित् ऐन्द्रजालिकः सहकारिभिः सह प्रदर्शनार्थम् आगतवान् । तेन सह तदीया प्राप्तवयस्का पुत्री अपि आगता आसीत् । तस्याः कण्ठे वाद्यं लम्बते स्म ।

ऐन्द्रजालिकः एकस्य आम्रबीजस्य उपरि कण्डोलमेकं न्यञ्च्य ताम्रतन्त्रीयुक्तं दण्डं कण्डोलं परितः सकृत् भ्रामितवान् । मन्त्रोच्चारणमपि आरब्धवान् । पुत्री वाद्यं वादयति स्म । किञ्चित्कालानन्तरम् ऐन्द्रजालिकः कण्डोलम् अपसारितवान् । तदा तत्र आम्रस्य लघु सस्यम् आसीत् । तस्मिन् सस्ये रमणीयम् एकं दाडिमफलमपि आसीत् ।

'अद्भुतम् । अपूर्वम् इन्द्रजालं प्रदर्शितवान् अस्ति ऐन्द्रजालिकः' इति वदन्तः उपस्थिताः जनाः हर्षं प्रकटितवन्तः । ऐन्द्रजालिकः हसन् - ''आम्रसस्ये दाडिमम् अस्ति । रुचिमपि आस्वादयन्तु तावत्'' इति वदन् फलं खण्डशः कर्तयित्वा पार्श्वे स्थितेभ्यः वितीर्णवान् ।

ते सर्वे अपि तानि फलानि खादन्तः - ''अहो विचित्रम् ! दर्शनेन दाडिमम् । रुचिः तु बीजपूरस्य'' इति वदन्तः करताडनं कृतवन्तः ।

अनन्तरम् ऐन्द्रजालिकः पुनश्च कांश्चन प्रयोगान् प्रदर्श्य अन्ते स्वपुत्रीं प्रदर्श्य - ''प्रभो ! एषा मम अद्वितीया पुत्री । अहम् एतां नागकन्यां भावयामि । किन्तु यदा अहम् एतस्याः विवाहार्थं प्रयत्नं करोमि तदा ये तां पश्यन्ति ते 'कुरूपिणी' इति वदन्तः पलायन्ते । किन्तु भवन्तः सर्वे अवलोकन्ताम् एताम्'' इति वदन् अस्पष्टशब्दैः मन्त्रोच्चारणं कुर्वन् मन्त्रदण्डेन पुत्रीं स्पृष्टवान् ।

अनुक्षणं तस्य पुत्री नागकन्या इव नागफणायाः आकारस्य मुकुटेन आभूषणैः च सह दृष्टिगोचरा अभवत् । तत्र विद्यमानाः सर्वे अपि आश्चर्यचकिताः अभवन् । आनन्देन करताडनम् कृतवन्तः ते ।

ऐन्द्रजालिकः विनयेन शिरः अवनमय्य तत्रत्यान् नमस्कृत्य मन्त्रदण्डेन पुत्रीं स्पृष्ट्वा तां यथापूर्वं कृतवान् । अनन्तरं महाराजम् उद्दिश्य - ''प्रभो, भवत्सु सर्वेषु मम निवेदनम् अस्ति । एतावत्पर्यन्तं मया यत् प्रदर्शितं तत्सर्वं यक्षिणीविद्यया कृतं भ्रममात्रम्'' इति उक्तवान् ।

महाराजः ऐन्द्रजालिकं प्रशंस्य तस्मै उपायनरूपेण सहस्रं सुवर्णनाणकानि दत्तवान् । मातापितृभ्यां सह वेदिकायाम् उपविश्य इन्द्रजालस्य प्रदर्शनं पश्यन्ती स्थिता राजकुमारी अव्यक्तभावनया उद्विग्ना सती आसनात् उत्थाय ऐन्द्रजालिकाय स्वस्य प्रभावि अङ्गुलीयकं दत्तवती । तम् उद्दिश्य - ''मम जन्मदिनसन्दर्भे भवते दीयमानम् अस्ति एतत् उपायनम् । अत्र भवतः यक्षिणिविद्यासदृशी गन्धर्वमाया अस्ति । सम्यक् परीक्षताम्'' इति उक्त्वा अन्तःपुरं गतवती ।

वेतालः एवं कथां समाप्य त्रिविक्रमम्



उद्दिश्य – "भोः राजन् ! कुरूपिण्यै राजकुमार्यै दैवनिर्णयानुसारम् एव गन्धर्वकन्यया अङ्गुलीयकं दत्तम् इति भावयामि अहम् । अङ्गुलीयकस्य साहाय्येन स्वेन इष्टः राजकुमारः तया परिणेतुं शक्यः आसीत् । तथा अकुर्वती सा अमूल्यम् अङ्गुलीयकम् ऐन्द्रजालिकाय उपायनरूपेण दत्तवती । तस्मिन् क्षणे किं सा विवेकभ्रष्टा अभवत् ? अथवा अङ्गुलीयकस्य महत्त्वम् एव न अवगतवती वा सा ? मम एतयोः सन्देहयोः उत्तरं जानन् अपि यदि भवान् न वदति तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति उक्तवान् ।

तदा त्रिविक्रमः – "यद्यपि गन्धर्वकन्यया महिमान्वितम् अङ्गुलीयकं दत्तम् आसीत्, तथापि तस्य अङ्गुलीयकस्य महिम्नः काश्चन सीमाः आसन् । एतत् वयं जानीमः एव । 'इतरैः प्रशंसनयोग्यं रूपं वास्तविकतया मम नास्ति । गन्धर्वकन्यायाः कृपया एव इदं रूपं प्राप्तम् अस्ति' इति स्वाभिमानिनी राजकुमारी कदापि न विस्मृतवती आसीत् । न केवलं तावत्, अङ्गुलीयकं धृत्वा सा कदापि मन्दिरं गन्तुं न शक्नोति स्म । यदि सा तथा अगमिष्यत् तर्हि अङ्गुलीयकस्य प्रभावः नष्टः अभविष्यत् । कुरूपस्य प्रकटनम् अभविष्यत् । यदि विवाहविषये चिन्तयामः तर्हि ज्ञायते यत् ऐन्द्रजालिकस्य पुत्र्याः, राजकुमार्याः च परिस्थितौ न कोऽपि भेदः इति । वास्तवे तु ऐन्द्रजालिकपुत्री नागकन्या न आसीत् । तथैव राजकुमारी अपि गन्धर्वकन्या न आसीत् । एकम् इन्द्रजालात् जातं चेत् अपरं गन्धर्वमायाजातम् आसीत् । 'मन्त्रतन्त्रैः सम्पादितं रूपैश्वर्यादिकं शाश्वतं न, तेन आत्मतृप्तिः अपि न भवति, आनन्दः अपि न भवति' इति सा अवगतवती आसीत् । अतः एव सा अङ्गुलीयकम् ऐन्द्रजालिकाय दत्तवती । एतेन तस्याः बुद्धिमत्ता विशालहृदयता च प्रदर्शिता अभवत् । एतादृशेन कार्येण आत्मशुद्धिः भवति । बुद्धिहीनैः मूर्खैः वा क्रियमाणं कार्यं न एतत्" इति उक्तवान् ।

एवं राज्ञा मौनभङ्गः कृतः आसीत् इति कारणतः शवान्तर्गतः वेतालः पुनश्च अदृश्यः भूत्वा वृक्षम् आरुह्य लम्बमानः स्थितवान् ।





# वास्तविकः पुत्रः

कस्मिंश्चित् ग्रामे काचित् वृद्धा आसीत्। सा ग्रामस्य पार्श्वे विद्यमानस्य अरण्यस्य पार्श्वे एकस्मिन् लघुकुटीरे वासं करोति स्म। सा प्रतिदिनं वनं गत्वा ततः पर्णानि दीर्घतृणानि च आनयति स्म। पर्णैः भोजनपत्राणि, तृणैः मार्जनीः च सज्जीकरोति स्म सा। तानि विक्रीय प्राप्तेन धनेन जीवनं यापयति स्म च।

यद्यपि तस्याः पुत्रः आसीत्, तथापि सः सर्वथा निष्प्रयोजकः आसीत्। मातुः साहाय्यं किञ्चिदपि न करोति स्म सः। सर्वदा धनार्थं मातरं पीडयति स्म। अलसः सन् सर्वत्र अटति स्म। मातुः विषये चिन्ता एव न आसीत् तस्य। एकदा सः मात्रा सह कलहं कृत्वा गृहं त्यक्त्वा गतवान्।

गच्छता कालेन सा वृद्धा शक्तिहीना सती गृहकार्यं कर्तुम् अपि असमर्था जाता। तथापि सा दैनन्दिनकार्यं तु न परित्यक्तवती।

एकदा अरण्यं गता सा आतपस्य कारणात् प्रज्ञाशून्या अभवत्। तस्मिन् एव समये एकः युवकः कुतश्चित् तत्र आगतवान्। सः पतितां वृद्धां दृष्टवान्। दयार्द्रः सः समीपस्थात् सरोवरात् जलम् आनीय तस्याः मुखे सिञ्चनं कृत्वा ताम् उत्थापितवान्।

वृद्धा मन्दम् उत्थाय - ''कः भवान् ?'' इति पृष्टवती।

तदा सः युवकः - ''अम्ब ! अहम् कश्चन अनाथः अस्मि। बाल्ये एव मम मातापितरौ दिवङ्गतौ। कोऽपि प्रीत्या व्यवहरन् मां स्वगृहसदस्यं भावयेत् वा इति पश्यन् सर्वत्र अटन् अस्मि'' इति उक्तवान्।

वृद्धा उत्थाय तृणानां बन्धं शिरसि स्थापयितुम् उद्युक्ता। तदा सः युवकः तं बन्धं स्वीकृत्य - ''अम्ब चलतु। अहम्

''पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा''

एतत् गृहं प्रापयामि'' इति उक्तवान् ।

गृहगमनानन्तरं सा वृद्धा - ''यावत् अन्यत्र स्थलं न लभ्यते तावत् भवान् अत्रैव वासं करोतु'' इति तम् उक्तवती ।

सः कुत्रापि न गतवान् एव । तया सः वासं कुर्वन्, तस्याः कार्यं कुर्वन् च तत्रैव वासं कृतवान् । वृद्धा तं पुत्रवत् एव पश्यति स्म । वृद्धा पर्णानां, मूलकानां वा निमित्तं कदाचित् एव अरण्यं गच्छति स्म । अन्यानि सर्वाणि कार्याणि युवकः एव करोति स्म । तत्कारणतः व्ययस्य अनन्तरम् अपि किञ्चित् धनम् अवशिष्यते स्म प्रतिदिनम् । अतः गृहे किञ्चित् धनं सञ्चितम् अभवत् ।

अथ कदाचित् वृद्धायाः पुत्रः कुतश्चित् गृहम् आगतवान् । 'गृहस्य परिस्थितिः इदानीं सम्यक् अस्ति' इति सः ज्ञातवान् । अतः सः धनार्थं मातरं पीडितवान् । 'एकं नाणकम् अपि न दास्यामि भवते' इति दृढस्वरेण उक्तवती वृद्धा ।

तदा तेन आगन्तुकयुवकेन सह एतस्याः पुत्रः कलहम् आरब्धवान् । 'एतं कथञ्चित् गृहात् बहिः प्रेषयामि चेत् माता मयि एव प्रीतिमती भविष्यति' इति तस्य चिन्तनम् आसीत् । एतत् ज्ञात्वा वृद्धा कदाचित् एकम् उपायं कृतवती । तयोः अनुपस्थितौ धनं सर्वं गोपयित्वा, सर्वाणि वस्तूनि इतस्ततः क्षिप्त्वा उच्चैः रोदनं कुर्वती सा गृहस्य पुरतः उपविष्टवती । तावति काले तस्याः पुत्रः आगतवान् । सः सर्वं दृष्ट्वा ताम् उद्दिश्य - ''भवती महामूर्खा अस्ति । यतः भवती मह्यं धनं न दत्तवती, अतः इदानीं सर्वनाशः अभवत् । भवत्याः मुखदर्शनम् अपि पापाय एव । इतः परं किम् अत्र स्थित्या ? एकं क्षणम् अपि अत्र न तिष्ठामि अहम्'' इति उक्त्वा ततः वेगेन निर्गतवान् ।

तावता तत्र आगतः पालितपुत्रः वृद्धायाः सान्त्वनं कुर्वन् - ''अम्ब ! रोदनं मा करोतु । धनं गतं चेत् चिन्ता मास्तु । पुनः सम्पादयाम'' इति उक्तवान् ।

तदा सा वृद्धा - ''धनं न गतं वत्स ! सः मूर्खः गतवान्, तावदेव । एतस्मात् कारणात् तस्य पीडनात् मुक्तिः प्राप्ता । धनं सुरक्षितम् अस्ति । सः मम पुत्रः दिवङ्गतः इति अहं भावयामि । भवान् एव मम पुत्रः'' इति वदन्ती तं प्रेम्णा आलिङ्गितवती ।



# कोरमण्डलतीरम्

रचना - मीरा नायर् ◆ चित्रम् - गोपकुमारः




मन्नारु-उपसागरम् अतिक्रम्य किञ्चिद्दूरम् अग्रे गतं चेत् कोरमण्डलतीरं लभ्यते । 'नैटिङ्गेल् आफ् इण्डिया' इति प्रसिद्धिं गतया कवयित्र्या सरोजिनीनायडुमहाभागया 'दि कोरमण्डल् फिषर्स्' नामके पद्ये बहुधा प्रशंसिते कोरमण्डलतीरे प्रसिद्धाः देवालयाः अपि सन्ति । कोरमण्डलतीरस्य वेलाङ्कन्निप्रदेशस्थं 'चर्च् आफ् अवर् लेडी आफ् हेल्त्'नामकः आरोग्यमातुः आलयः अतीव प्रसिद्धः । असङ्ख्याकाः भक्ताः अत्र आगच्छन्ति । ते देवीं प्रार्थयन्ति यत् वयम् अनारोग्यात् मुक्ताः चेत् सुवर्णेन रजतेन च निर्मितं नेत्रम्, कर्णः, पादः, हस्तः इत्यादीन् अवयवान् उपायनरूपेण भवत्यै समर्पयिष्यामः इति । रोगात् मुक्ताः समर्पयन्ति च । उपायनीकृतानि सुवर्णरजत-निर्मितानि एतादृशवस्तूनि प्रदर्शनार्थं स्थापितानि सन्ति अस्मिन् मन्दिरे । एतस्य मन्दिरस्य भित्तिषु बैबल्कथा चित्ररूपेण लिखिता अस्ति । एतस्याः कथायाः पठनं समाप्य अग्रे गतं चेत् समुद्रतीरे प्रथमतया निर्मितं एतस्य मन्दिरस्य पुरातनं स्थलं प्राप्नुमः ।



*वेलाङ्कन्नि आरोग्यमातुः मन्दिरम्*

वेलाङ्कन्निप्रदेशस्य उत्तर-दिशि नागपत्तननामकं लघु-नौकास्थानम् अस्ति । एतत् प्राचीनकाले प्रसिद्धं नौका-स्थाननगरम् आसीत् । क्रि.श.पञ्चमे शतके एतत् पल्लवानां प्रमुखं नौकाकेन्द्रम् आसीत् । एतस्य प्रदेशस्य पश्चिमदिशि २४ कि.मी. दूरे श्रीत्यागराजस्वामिनः जन्म-स्थानं तिरुवैयारुनामकं पञ्चनदीक्षेत्रम् अस्ति ।







*कर्णाटकसङ्गीतस्य त्रिमूर्तयः*

कर्णाटकसङ्गीते साम्प्रदायिकरीत्या त्रिमूर्तयः इति ख्यातिं प्राप्तवन्तः सन्ति श्रीत्यागराजस्वामी, मुत्तुस्वामिदीक्षितः, श्यामशास्त्री च ।

नागपत्तनात् ४ कि.मी. दूरे उत्तरदिशि नागूर् अस्ति । अत्र हजरत् मियान् नामकं हजरत् मीरान् सुल्तान् सय्यद्षा अब्दुल् षामीदवर्यस्य स्मारकम् अस्ति । ५०० वर्षेभ्यः पूर्वं निर्मितम् एतत् स्मारकं द्रष्टुं बहवः गच्छन्ति । एतस्य सुवर्णगोपुरं परितः पञ्चस्तूपाः सन्ति । एतस्मिन् स्मारकभवने विद्यमानस्य तटाकजलस्य रोगनिवारिका शक्तिः अस्ति इति भावयन्ति भक्ताः ।

ताडपत्रैः स्वकरकुशलनैपुण्यं प्रदर्शयद्भिः कलाकारैः निर्मिताः रमणीयाः स्यूताः, व्यजनानि, कटाः, इत्यादीनां वस्तूनां निर्माणे अपि नागूर् प्रख्यातम् अस्ति ।

इतोऽपि किञ्चिद्दूरम् उत्तराभिमुखं प्रयाणं कृतं चेत् कारैक्काल्नामकम् अपरं पुरातनं क्षेत्रं लभ्यते । भारतस्य केन्द्रशासनान्तर्गतस्य पाण्डिचेरी-राज्यस्य चतुर्षु मण्डलेषु एतत् अपि अन्यतमम् ।

षष्ठे क्रिस्तशतके जाता शिवशरणा कवयित्री कारैक्काल् अम्मैयार् एतत्प्रदेशीया एव । शैवभक्तिसाहित्येषु एतस्याः कृतयः एव प्राचीनतमाः इति श्रूयते । 'अर्बुद तिरुवन्दादिः, इरट्टे मणिमालै, मूत्त तिरुप्पटिकङ्गल् इत्येते एतया रचिताः प्रमुखाः त्रयः ग्रन्थाः ।

'मम पत्नी अपूर्वशक्तिमती' इति ज्ञात्वा कारैकाल् अम्मेयार्वर्यायाः पतिः तां परित्यक्तवान् । पत्युः एतस्मात् व्यवहारात् खिन्ना कारैकाल्-अम्मेयार् वैराग्यं प्राप्य गृहं परित्यज्य संन्यासिनी इव देशाटनं कुर्वती भक्तिगीतैः शिवस्य स्तवनं कुर्वती जीवनं यापयति स्म । तया रचितानां भक्तिगीतानां कारणतः तमिळुसाहित्ये तस्याः नाम चिरस्थायि जातम् । एतस्याः भक्तकवयित्र्याः नाम्नि एव कारैकाल्-प्रदेशे कश्चन प्रदेशः अस्ति ।



*डेन्स् बर्ग भवनम्*

ततोऽपि अग्रे गतं चेत् ट्राङ्क्वोबार्नामकं (तरङ्गबाडि इति अपरं नाम) लभ्यते । पूर्वतनकाले एतत् ड्यानिष् वसतिप्रदेशः आसीत् । एशियाखण्डे १६२० तः १८४० पर्यन्तं ड्यानिष्शासनाधीनम् अद्वितीयं राज्यम् एतत् आसीत् । एतस्य मुख्यं नगरं तु आरम्भे यथा आसीत्, तथैव अस्ति इदानीम् अपि । नागरिकाणाम् अन्तः बहिः च गमनागमनार्थं विद्यमानानि द्वाराणि २०० वर्षेभ्यः पूर्वं निर्मितानि अत्र सन्ति । अन्तिमः ड्यानिष् गवर्नर् जान्स्रेल्लिङ्ग् १८२३ तः १८४१ पर्यन्तं यत्र वसति स्म, तत् रेल्लिङ्गगार्ड् क्रैस्तमन्दिरद्वयं च पूर्वतनकालस्य ड्यानिषुवैभवस्य प्रतीकानि सन्ति ।

तरङ्गबाडितः उत्तरे पूम्पुहार् अस्ति, यत्र च कावेरीनदी समुद्रेण सङ्गता भवति । एतत् अपि कस्मिंश्चित् काले वैभवेन राज्यपालनं कृतवतां चोलानां नौकास्थानकपत्तनम् आसीत् । इतः मियान्मार्, श्रीलङ्का, मलेषिया, इण्डोचैना, इत्यादिभिः देशैः सह नौकावाणिज्यं प्रचलति स्म ।

अत्र बहुभ्यः वर्षेभ्यः पूर्वं प्रतिग्रीष्मकालम् इन्द्रपूजा प्रचलति स्म । केनचित् कारणेन एकस्मिन् वर्षे पूजा न प्रवृत्ता । एतस्मात् कुपितः समुद्रः उद्गतः सन् नगरम् एव अनाशयत् इति काचित् कथा श्रूयते । पूम्पुहार्समीपस्थे कीलैयूर्मध्ये १९६२ तमे वर्षे भूविज्ञानिनः भूमेः खननं कृत्वा समुद्रस्य शोधनं कृतवन्तः ।



*पूम्पुहार् कलाकेन्द्रम्*

तदा पुरातननगरम् एकं समुद्रे लीनम् आसीत् इत्यस्य साक्ष्यं तैः दृष्टम् । पूर्वं पूम्पुहार्नगरं बौद्धमतानुयायिनां केन्द्रम् आसीत् । मणिमेखलै-नामकं प्रसिद्धं तमिळुकाव्यं बौद्धमतप्रचारार्थम् एव रचितम् अभवत् । पूम्पुहार्तः उत्तरदिशि किञ्चिद्दूरं प्रयाणं कृतं चेत् चिदम्बरक्षेत्रं प्राप्नुमः, यत्र च प्रसिद्धं नटराजमन्दिरम् अस्ति । ग्रामस्य मध्यभागे एव नटराजमन्दिरम् अस्ति । एतत् शिवमन्दिरं भारते एव प्रसिद्धिं गतम् अस्ति ।

कदाचित् शिवपार्वत्योः मध्ये नृत्यस्पर्धा प्रवृत्ता । उभौ अपि समानप्रतिभया नृत्यं कृतवन्तौ । उभयोर्मध्ये कः सम्यक् नृत्यं कृतवान्, प्रथमस्थानं कस्य इति निर्णेतुं तत्र सम्मिलिताः देवताः मुनयः च न शक्ताः । अन्ते शिवः योगशक्त्या एकेन एव पादेन स्थित्वा द्वितीयं पादं स्कन्धयोः उपरि आकृष्य पार्वतीं दृष्टवान् । तदा पार्वती विनयेन स्वपराजयम् अङ्गीकृतवती इति काचित् पुराणकथा श्रूयते ।

एतया एव भङ्ग्या स्थितस्य शिवस्य विग्रहः देवालयस्य मण्डपे अस्ति । एषः विग्रहः पञ्चलोह-मिश्रणेन निर्मितः अस्ति । मण्डपस्य अन्तः सुवर्णवर्णेन लिप्ताः ताम्रतन्त्र्यः स्थापिताः सन्ति ।

चिदम्बरस्य उत्तरदिशि ऐतिहासिकं भारतशासनाधीनं पाण्डिचेरीराज्यम् अस्ति । पाण्डिचेरीनगरम् एतस्य प्रदेशस्य राजधानी अस्ति । प्रथम-शतकात् अपि रोमनूजनाः, पोर्चुगीसजनाः, फ्रेञ्च्-डच्-ब्रिटिश्जनाः च अत्र वाणिज्यनिमित्तं वसतिगृहाणि निर्मितवन्तः आसन् । १८१४ तः १९५४ पर्यन्तम् अपि एतत् फ्रेञ्चजनानाम् अधीनम् आसीत् ।

भारते स्वातन्त्र्यसङ्ग्रामकाले अस्माकं स्वातन्त्र्ययोधानां दुर्गम् इव आसीत् एतत् । सुब्रह्मण्यभारतीनामकः सुप्रसिद्धः तमिळुकविः यदा अत्र आसीत्, तदा सः बहूनि



*चिदम्बरीयः नटराजविग्रहः*

देशभक्तिगीतानि विरचय्य जनेषु देशभक्तिम् उत्पादितवान् । एषः तमिळुसाहित्ये नवयुगस्य आरम्भं कृत्वा 'नवयुगमूलपुरुषः' इति ख्यातिं गतः ।



श्री अरविन्दः

कण्णन्पाट्टु, कुयिल्पाट्टु, पाञ्चालीशपथम् इत्यादयः एतस्य प्रसिद्धाः कृतयः । श्रोतॄणाम् उत्तेजिकाः धर्मप्रेरिकाः च एतस्य कविताः अद्य अपि तमिळुनाडुप्रदेशेषु श्रूयन्ते । यस्मिन् गृहे तेन जीवितम् आसीत्, तत् (२०, ईश्वरन्, धर्मराजकोयिल् वीथ्यां विद्यमानं) गृहं 'राष्ट्रियं स्मारकगृहम्' इति सर्वकारेण घोषितम् अस्ति ।

पाण्डिचेरीम् आगत्य तत्रैव निवासं कृतवान् अपरः स्वातन्त्र्ययोधः श्री अरविन्दघोषः । एषः १९२० तमे वर्षे पाण्डिचेरीम् आगत्य आध्यात्मिकजीवनम् आरब्धवान् । एषः 'लैफ् डिवैन्'नामकं सावित्रीनामकं च महाग्रन्थं रचितवान् अस्ति । भगवद्गीतायाः वेदोपनिषदां च व्याख्यानम् एतेन कृतम् अस्ति ।

स्वस्य आदर्शयुक्तं प्रशान्तजीवनविधानं व्यवहारे स्थापयितुम् आनुकूल्यं स्यात् इति विचिन्त्य श्रीमातुः सहकारेण श्रीमता अरविन्दवर्येण निर्मितः आश्रमः अत्र अस्ति ।

श्रीमातुः मूलनाम मिरा अल्फासा । भक्ताः एतां भक्त्या श्रीमाता इति आह्वयन्ति । फ्रान्स्देशीया एषा अरविन्दस्य शिष्या आसीत् । १९२० तः १९५० पर्यन्तं, तन्नाम अरविन्दस्य अन्तिमकालपर्यन्तम् अपि एषा तस्य सहायिका आसीत् । अरविन्दस्य मरणानन्तरं आध्यात्मिक-उत्तराधिकारिणी सती एषा १९७३ पर्यन्तं कार्यं कृतवती ।

पाण्डिचेरीतः ८ कि.मी. दूरे आरोविल् -(उदयनगरम्)नामकः प्रदेशः १९६८ तमे वर्षे अरविन्दवर्यस्य स्मरणार्थं सज्जीकृतः । यस्य कस्यापि देशस्य जनः भवतु, सः सत्सङ्कल्पेन, उन्नतानाम् आशयानां सिद्ध्यर्थं त्रिकरणशुद्धः भूत्वा साधनां कर्तुम् इच्छति, अपि च शान्त्या प्रामाणिकतया च साधनां कर्तुम् इच्छति, तर्हि तदीयः स्वकीयप्रदेशः कश्चन आवश्यकः इति अरविन्दवर्यस्य इच्छा आसीत् । उदात्तस्य आशयस्य प्रतिरूपम् एव एतत् तदीयस्य अरोविल् !



*श्री मातृमन्दिरम्, अरोविल्*



# कूपमण्डूकः

रामदुर्गस्थः गोपालः बन्धुषु अत्यन्तम् आदरवान् आसीत् । तस्य पत्नी श्यामला अपि गृहागतान् अतिथीन् अत्यन्तं सौहार्देन सत्करोति स्म । अतः एतयोः दम्पत्योः विषये बान्धवाः अपि प्रीतिमन्तः आसन् ।

सोमदुर्गे साम्बशिवः नाम कश्चन युवकः आसीत् । सः धनवान् आसीत् । किन्तु कूपमण्डूकः । तस्य चिन्तनम् आसीत् यत् सोमदुर्गसदृशं नगरम् एव नास्ति इति । मद्बान्धवेभ्यः श्रेष्ठाः जनाः लोके अन्ये न सन्ति एव इत्यपि चिन्तयति स्म सः । एतस्याः पूर्वाग्रहबुद्धेः कारणतः एव सः अनेकवर्षपर्यन्तम् अविवाहितः एव आसीत् । अन्ते सः शरण्यानामिकां कन्यां परिणीतवान् । शरण्या अत्यन्तं कुशला बुद्धिमती रूपवती च आसीत् । विवाहानन्तरं केषुचित् एव दिनेषु सा पत्युः स्वभावादिकं सर्वं ज्ञातवती ।

अथ कदाचित् शरण्या चिन्तितवती - 'यदि एषः बाह्यप्रपञ्चं न पश्यति तर्हि एतस्य पूर्वाग्रहः न अपगमिष्यति' इति ।

रामदुर्गस्थः गोपालः तस्याः दूरबन्धुः आसीत् । 'तस्य समीपं नीतं चेत् एषः कदाचित् परिवर्तितः भवेत्' इति आलोच्य सा कदाचित् पतिम् उद्दिश्य - ''रामदुर्गं गत्वा आगच्छाव'' इत्युक्तवती । किन्तु गोपालः एतं प्रस्तावं न अङ्गीकृतवान् ।

तदा शरण्या - ''रामदुर्गं सोमदुर्गात् अपि श्रेष्ठं बृहत् च अस्ति । तत्र गोपालः नाम कश्चन मम ज्येष्ठपितृव्यस्य पुत्रः अस्ति । 'सः यावन्तं विषयं जानाति तावन्तं विषयं प्रायः अन्यः कोऽपि न जानाति' इति जनाः वदन्ति । यदि भवान् तत्र गच्छेत् तर्हि भवतोः कतरः श्रेष्ठः इत्येषः अंशः निरूपितः भवेत्'' इति उक्तवती । एवं तया

'प्राणेशः'



साम्बशिवस्य मनसि स्पर्धाभावना जागरिता। अतः अनन्तरदिने एव गोपालः पत्न्या सह रामदुर्गं प्रति प्रस्थितः।

श्यामला गोपालः च साम्बशिवं तत्पत्नीं शरण्यां च महता आदरेण स्वागतीकृतवन्तौ। श्यामला रुचिकरं पायसम् अपि सज्जीकृतवती। शरण्या पायसस्य रुचिम् अभिनन्दितवती।

साम्बशिवः तु मुखं विकृतं कृत्वा - ''पायसं महिष्याः क्षीरेण युक्तं भवेत्। तस्मिन् च सोमदुर्गस्य एव भल्लातकबीजं स्थापनीयम्। तत् च मम मातुः हस्तेन एव सिद्धं स्यात्। तदा एव तस्य रुचिः अनुपमा स्यात्'' इति उक्तवान्।

तदा श्यामलायाः मुखं म्लानम् अभवत्। किन्तु गोपालः विषयान्तरं प्रस्तुतीकृत्य - ''आवुत्त, भवान् परोक्षतया अस्मान् स्वग्रामम् प्रति निमन्त्रयन् अस्ति। वयं यदि तत्र आगच्छेम तर्हि केवलेन पायसेन तृप्ताः न भवेम। भवतः मातुः हस्तेन नानाविधभक्ष्याणि कारयिष्यामः'' इति उक्तवान्।

तस्मिन् दिने रात्रौ गोपालः अतिथ्योः कृते शाल्मलीतूलनिर्मितां शय्यां सज्जीकृतवान्। तां दृष्ट्वा साम्बशिवः पुनः अतृप्तः सन् - ''यदा वायुमण्डलम् उष्णं भवति, तदा शाल्मलीतूलनिर्मिताः शय्याः योग्याः न भवन्ति। अस्माकं नगरे तु शरीरहितकारी नूतनः शीतकार्पासः लभ्यते। तेन निर्मितायाः शय्यायाः उपयोगं कुर्मः वयं ग्रीष्मकाले'' इति उक्तवान्।

एतत् वचनं श्रुत्वा गोपालः अपि खिन्नः अभवत्। एतत् ज्ञात्वा शरण्या गोपालं पृथक् आहूय - ''भ्रातः, भवान् तु अन्येषां गुणान् प्रकाशयति। मम भर्ता तु अन्यान् सर्वदा दूषयन् भवति। भवान् तं परिवर्तयति इति विश्वासेन एव अहम् अत्र तम् आनीतवती अस्मि। केनापि उपायेन कृपया तं परिवर्तयतु'' इति निवेदितवती।

एतत् श्रुत्वा गोपालः - ''भगिनि! अलं चिन्तया। भवती पत्युः वास्तवभावम् उक्त्वा उपकारम् एव कृतवती। अग्रे किं करणीयम् इति अहं चिन्तयिष्यामि'' इति अवदत्।

अनन्तरदिने गोपालः साम्बशिवेन सह सम्भाषणं कुर्वन् बन्धोः मुकुन्दस्य परिचयम् उक्त्वा - ''मुकुन्दः स्वस्य पुत्र्याः विवाहं निर्वर्तितवान्। तदा अहं पञ्चशतं



रूप्यकाणि दत्तवान् । यदा मुकुन्दस्य गृहम् अग्निना दग्धं, तदापि अहं काष्ठादीनि विना मूल्यं दत्तवान् । यदा च तस्य अनारोग्यम् अभवत् तदापि अहम् औषधादिकं दापयितुं साहाय्यं कृतवान् । तथापि सः मां न स्मरति । तस्य गृहं गत्वा आगच्छाव'' इति वदन् साम्बशिवं मुकुन्दस्य गृहं नीतवान् ।

मुकुन्दः गोपालस्य विषये आदरं न प्रकटितवान् । तम् अविगणय्य साम्बशिवेन सह एव सम्यक् सम्भाषणं कृतवान् । यद्यपि गोपालः एव विनयेन अनेकवारं सम्भाषणं कर्तुं प्रयत्नं कृतवान्, तथापि मुकुन्दः औदासीन्यं प्रदर्शितवान् ।

किन्तु यदा गोपालः ततः प्रस्थितः, तदा - ''श्वः अहं वृषभद्वयं क्रेतुम् इच्छामि, तदर्थं पञ्चविंशतिसहस्रं रूप्यकाणि भवता दातव्यानि । न दीयते इति न वक्तव्यम्'' इति आज्ञास्वरेण एव अवदत् ।

ततः निर्गतः गोपालः साम्बशिवम् अवदत् - ''ईदृशमित्राणां विषये मया कथं व्यवहर्तव्यम् इति भवान् एव वदतु'' इति ।

तदा साम्बशिवः क्षणकालम् आलोच्य - ''यदा अहं मुकुन्दं दृष्टवान् तदा मम ग्रामस्थः गोविन्दः मम स्मृतिपटलम् आगतः । अतः अहं मुकुन्दविषये किम् अपि न चिन्तितवान् । अन्यैः सह कथं व्यवहरणीयम् इति यः जानाति तस्य विषये सर्वे उत्तमतया एव व्यवहरन्ति । मम माता एतं विषयं मां सम्यक् शिक्षितवती अस्ति । इदानीं मम विषये पश्यतु - सर्वे सम्यक् एव व्यवहरन्ति । न कश्चन कलहः अस्ति'' इति उक्तवान् ।

''नूनं भवान् समीचीनम् उपदेशं दत्तवान् । तदर्थम् अहं कृतज्ञः अस्मि'' इत्युक्तवान् गोपालः ।

''अहम् कीदृशम् उपदेशं कृतवान् ?'' इति आश्चर्येण पृष्टवान् साम्बशिवः ।

''भवान् यथा व्यवहरति तथा एव मया अपि सर्वैः सह व्यवहरणीयम् । तदा न किञ्चित् बाधकम् इति किल भवतः आशयः ?'' इति अवदत् गोपालः

तदा सम्भ्रान्तः साम्बशिवः - ''आम्, आम्'' इत्युक्तवान् ।

अनन्तरं गोपालः आम्रवणं तस्मै प्रदर्श्य - ''अत्र ग्रामे तृणैः, पर्णादिभिः च गोभरं साधयन्ति । एषः नूतनः गोभरः आम्रफलानि अधिकतया वर्धयति । तेन आम्रस्य रुचिः अपि अनुपमा भवति'' इति

अवदत् ।

तत् श्रुत्वा साम्बशिवः - ''तृण-पर्णादिभिः निर्मितस्य गोभरस्य उपयोगतः अर्बुदरोगः भवितुम् अर्हति इति श्रूयते । अतः अस्माकं ग्रामे रासायनिकगोभरस्य उपयोगः क्रियते सर्वैः अपि । तेन फलादीनां रुचिः अपि वर्धते'' इति वदन् गोपालस्य आशयं खण्डितवान् ।

गोपालः ततः तं वस्त्राणाम् आपणं नीतवान् । रामनगरस्य देवस्थानानि, प्रेक्षणीयस्थलानि चापि दर्शितवान् । किन्तु साम्बशिवः कस्यापि दर्शने विशेषासक्तिं न प्रदर्शितवान् । तस्य पत्नी शरण्या तावत् सर्वं दृष्ट्वा आनन्देन प्रशंसति स्म । किन्तु साम्बशिवः पुनः पुनः दुरभिमानेन स्वनगरस्य सौन्दर्यम् एव वर्णयति स्म । रामदुर्गस्य सौन्दर्यं सः न इष्टवान् एव ।

केषाञ्चित् दिनानाम् अनन्तरं साम्बशिवः पत्न्या सह स्वनगरं गन्तुम् उद्युक्तः । तदा शरण्या गोपालं तत्पत्नीं च उद्दिश्य - ''भवतोः आतिथ्यं समीचीनम् आसीत् । न कदापि भवन्तौ विस्मरामः । भवतोः नगरं नूनम् अतीवसुन्दरम् अस्ति । अत्र आगत्य अहम् बहु सन्तुष्टा अस्मि'' इति अवदत् ।

तदा गोपालः - ''भवती एतत् सर्वं पत्ये निवेदयतु । पुनः यदा भवती आगमिष्यति तेन सह एव आगच्छतु'' इति उक्तवान् ।

तदा चकिता सा पृष्टवती - ''मम आर्यपुत्रः इदानीम् आगतः अस्ति एव किल ?'' इति ।

तदा गोपालः उच्चैः हसन् - ''अहं न तथा चिन्तयामि, सः सोमदुर्गं त्यक्त्वा कदापि न आगतवान् एव'' इति उक्तवान् ।

तत् श्रुत्वा दिग्भ्रान्तस्य साम्बशिवस्य मनसि एवं भावना उत्पन्ना - 'रामदुर्गे यदा अहं पदार्थान्, स्थलानि च पश्यामि स्म तदा सर्वदा केवलं सोमदुर्गमेव स्मरामि स्म । अतः एव एषः एवं वदति' इति । 'अतः अत्र मम आगमनं व्यर्थम् एव अभवत्' इति चिन्तितवान् सः ।

अनन्तरं स्वग्रामं गतः साम्बशिवः कालान्तरे किञ्चित् किञ्चित् स्वस्य स्वभावस्य परिवर्तनं कर्तुं प्रयत्नं कृतवान् । अज्ञातं ज्ञातुम् अपि प्रयत्नं कृतवान् सः । एवं तस्मिन् परिवर्तनं दृष्ट्वा पत्नी शरण्या अत्यन्तं सन्तुष्टा अभवत् ।



चन्दमामायाः

# सुवर्ण-समयः -१०



**१. ... धूमावृतः एषः अग्निपर्वतः कुत्र अस्ति ?**

एषः यत्र अस्ति, तद्देशीयाः प्रजाः एतं पर्वतं पवित्रतमं भावयन्ति । एतस्य औन्नत्यं ३,७७५ मीटरमितम् । अत्यधिकप्रमाणेन भावचित्रग्रहणम् एतस्य एव पर्वतस्य जातम् अस्ति ।

## प्रपञ्चे कुत्र एतान् वयं द्रष्टुं शक्नुयाम ?

**२. ... एतत् 'श्वे ड्यागन्'भवनं कुत्र अस्ति ?**

एतत् भवनं 'सुवर्णपगोडा' इत्यपि निर्दिश्यते । एतस्य शिखरं ८८६८ कृशसुवर्णफलकैः अलङ्कृतम् अस्ति ।

**३. ... महाघटी कुत्रत्या ?**

एषा अतिप्रसिद्धासु घटीषु अन्यतमा । एतां घटीं यः अत्र स्थापितवान् तस्य नाम्ना एषा निर्दिश्यते इति वदन्ति केचन । पुनः केचन वदन्ति यत् प्रसिद्धमल्लयुद्ध-निपुणस्य नाम्ना एषा निर्दिश्यते इति । एतस्य भारः १३ टन्मितः ।



**४. ... लूमर्-पदवाच्याः दीर्घपुच्छयुक्ताः एते दृश्यन्ते कुत्र ?**

केचन लूमर्जन्तवः वानराः इव एव दृश्यन्ते प्रायः । पुनः केचन मूषकाः इव, चिक्रोडाः इव वा दृश्यन्ते ।



**५. ... अतिगम्भीरा मानव-निर्मिता खनी कुत्र अस्ति ?**

१८७१-तमे वर्षे अत्र वज्राणि प्राप्तानि । ततः आरभ्य १९१५तमवर्ष यावत् निरन्तरखननं प्रवृत्तम् । कोटिटन्मिता पङ्कमयी



मृत्तिका शिलाः च ततः अपनीताः । २.७ टन् मितं वज्रं ततः प्राप्तं च । एतस्मात् कारणात् अतिविशाला एषा खनी निर्मिता अभवत् ।

*कुशाग्रमतयः ऊहापोहपटवः अपराधसंशोधकाः अपि कदाचित् प्रमाद्यन्ति । सुप्रसिद्धेन षेर्लाक्होम्स्वर्येण कृतः प्रमादः कः इति किं भवन्तः वक्तुं शक्नुवन्ति ?*

# प्रमादः कृतः होम्स्वर्येण !

क्रिस्मस्पर्वणः द्वितीये दिने अहं मम मित्रं षर्लाक्होम्स्वर्यं द्रष्टुं तदीयं गृहं गतवान् । धूसरवर्णवस्त्रधारी होम्स्वर्यः सुखासने उपविश्य धूमवर्तिकाहस्तः सन् तस्य दिनस्य पत्रिकापठने निरतः आसीत् । तस्य पार्श्वे एकः प्राचीनः आसन्दः आसीत् । तस्य कोणे एकं प्राचीनं शिरस्त्रं लम्बमानम् आसीत् । तत्पार्श्वे परीक्षककाचकादिकम् आसीत् इत्यतः मया ऊहितं यत् एतस्य शिरस्त्रस्य परिक्षणार्थं एव तेन तत् तथा स्थापितम् इति ।

'क्षन्तव्यः अहम् । भवतः अवधानस्य भङ्गः जातः स्यात्'' इति वदन् अहं गृहं प्रविष्टवान् ।

''भवतः आगमनं सन्तोषाय एव । सामान्याः अपि अंशाः क्वचित् स्वारस्ययुक्तान् अंशान् प्रकाशयन्ति'' इति उक्तवान् होमः ।

''एवम् !'' आश्चर्येण उक्तवान् अहम् ।

''भवान् आयुक्तं पीटर्सन्वर्यं जानीयात् एव खलु ?''

''आम् ।''

''एतत् शिरस्त्रं तत्सम्बन्धि अस्ति ।''

''सः धरति स्म वा एतत् ?''

''न । तेन आनीय दत्तम् एतत् । एतस्य स्वामी कः इति न ज्ञायते ।''

''स्वमी कः इति ज्ञानार्थम् अभिज्ञापकांशः कोऽपि लक्षितः ?''

''एतस्य साहाय्येन तत् ज्ञातव्यम् ।''

''शिरस्त्रसाहाय्येन ?''

''आम् ।''

''प्राचीनं छिन्नम् एतत् शिरस्त्रम् अत्र कथं वा उपकुर्यात् ?''

होम्स्वर्यः शिरस्त्रम् उन्नीय हस्तेन गृह्णन् इतस्ततः चालयन् परीक्षमाणः - ''एतस्य धर्ता जनः बुद्धिमान् आसीत् इत्यत्र नास्ति एव सन्देहः ।''

''भवान् उपहासं तु कुर्वन् न स्यात् खलु ? किं मां मूर्खं भावयति भवान्, येन अहं भवद्वचने विश्वासं कुर्याम् ? एतत् शिरस्त्रं धर्तुः बुद्धिमत्तां कथं वा द्योतयितुम् अर्हति ?'' इति आश्चर्येण पृष्टवान् अहम् ।

एतत् श्रुत्वा होम्स्वर्यः मन्दं तत् शिरस्त्रं स्वशिरसि स्थापितवान् । तत् तदीयं ललाटम् आवृत्य नासिकासमीपे स्थितम् ।

''एतावत् विशालं मस्तिष्कं यस्य भवति तस्मिन् किमपि भवेत् एव खलु ?'' इति उक्तवान् होम्स्वर्यः ।

[कानन् डयल्वर्यस्य 'दि ब्ल्यू कार्म्बङ्कुल्'तः उद्धृतम् ।]



## चित्र-समस्या

समुद्रतीरं प्रति युरोपियन्जनानाम् आगमनं प्रतीक्षमाणः अस्ति कश्चन रेड्इण्डियन् जनः । एतस्मिन् चित्रे दृश्यमानः प्रमुखः दोषः कः ?

## विदेशीयाः यदा तीरम् आगताः तदा ....





## चित्रीयाः

### प्रश्नाः

१. अधः दृश्यमानं चित्रं ....
१. पेरट्मीनस्य, २. विष्लर्-मीनस्य, ३. आर्चर्मीनस्य ।



२. जलस्य उपरि शयानः एषः तरुणः पत्रिकां पठन् अस्ति । सः यस्य सरोवरस्य जलस्य उपरि शयनं कृतवान् अस्ति तत् अतिलवणयुतत्वेन लोके प्रसिद्धम् । तस्य नाम -
१. क्याप्सियन् समुद्रः इति, २. मृतसमुद्रः इति, ३. टारेन्स्सरोवरम् इति ।




३. एषः भूपटः कं देशं सूचयति ?
१. स्पेयिन्-देशम्, २.फ्रान्स्-देशम्, ३. पोर्चुगल्देशम् ।





## सुवर्णसमयप्रश्नावल्याः (९) उत्तराणि

### प्रपञ्चे कुत्र .... ?

१. कोलाभल्लूकाः आस्ट्रेलियादेशमात्रे दृश्यन्ते ।

२. समुद्रकन्याविग्रहः कोपेन्हागन्नौकास्थानस्य द्वारस्य समीपे अस्ति ।

३. टुस्साड्स्माटिका सिक्थप्रतिमाप्रदर्शनशाला लण्डन्नगरे अस्ति ।

४. सुवर्णद्वारसेतुः अतिक्रमणीया चेत् अमेरिकास्थं स्यान्फ्रान्सिस्कोनगरं प्रति गन्तव्यम् ।

### प्रश्नावली

१. त्रयः जनाः अष्ट रोटिकाः च आसन् खलु ? प्रतिरोटिकं ते भागत्रयं कृतवन्तः आदौ । तदा आहत्य २४ रोटिकाखण्डाः सिद्धाः । एकैकः ८ खण्डान् खादितवान् । यः ५ रोटिकाः आनीतवान् आसीत् सः १५ खण्डेषु सप्त खण्डान् (१५-८) तृतीयाय दत्तवान् आसीत् । तिस्रः रोटिकाः आनीतवान् जनः एकं खण्डं (९-८) तृतीयाय दत्तवान् । अतः तृतीयेन दत्ते धने ७ रूप्यकाणि सप्तखण्डदात्रा स्वीकृतानि । एकखण्डदाता एकं रूप्यकं प्राप्तवान् ।

२. यतः तदा वृष्टिः न आसीत् ।

३. अन्ये यत् कुर्वन्ति तदेव कुर्वन्ति ते अपि । तन्नाम क्षिपन्ति ।

४. पञ्चसु स्थानकेषु ।

५. ग्रन्थिरहिता श्वेत-रक्तकरवस्त्रयोः दशा ग्रन्थिना योजनीया ।

६. कशा । कशाग्रं शब्दवेगम् अपि अतिक्रम्य सञ्चरति ।

७. चषकस्थः द्रवः न जलम् । तत्र अन्यः द्रवः आसीत् ।

८. पञ्चमे दिने जलं पतितम् । अवशिष्टेषु अष्टसु दिनेषु सर्वैः अपि स्वभागः प्राप्तः एव । एतस्मात् सिद्धं यत् तस्मिन् दिने मृतस्य भागभूतं ८ लीटर्मितं जलम् एव पतितम् इति ।

९. बसवराजेन वामहस्तः उन्नीतः आसीत् । व्रणितः तु दक्षिणहस्तः ।



# महाभारतम्

'पाण्डवानां विषयं श्रुत्वा धृतराष्ट्रः पश्चात्तापम् अनुभवन् अस्ति, भविष्यतः क्लेशान् चिन्तयन् भीतः अस्ति' इति ज्ञात्वा शकुनिः एतं विचारं कर्णं निवेदितवान् । अनन्तरं तौ उभौ अपि दुर्योधनसमीपं गत्वा धृतराष्ट्रस्य चिन्तनं निवेदितवन्तौ । एतत् ज्ञात्वा दुर्योधनः किङ्कर्तव्यतामूढः जातः ।

तदा कर्णः दुर्योधनम् उद्दिश्य - ''राजन् ! भवतः बुद्धिमत्ताकारणतः ये पाण्डवाः वनवासम् आचरन्तः सन्ति तैः भीतैः भवितव्यम्, न तु तेषां राज्यम् अपि स्वाधीनीकृत्य महाराजेन सता सर्वसुखम् अनुभवता भवता । पाण्डवाः इदानीं द्वैतवने सन्ति इति श्रूयते । अस्मिन् सन्दर्भे तेषां पुरतः भवान् स्ववैभवं प्रदर्शयति चेत् ते इतोऽपि दुःखिताः भवन्ति । भवतः राज्ञीवासस्य स्त्रीः दृष्ट्वा द्रौपदी खिन्ना भवेत्'' इति उक्तवान् ।

शकुनिः अपि कर्णस्य वचनम् अनुमतवान् । एवमेव करणीयम् इत्यपि दुर्योधनं निवेदितवान् । तयोः वचनं श्रुत्वा दुर्योधनः - ''भवतोः योजना समीचीना अस्ति । किन्तु मम पिता अस्मान् द्वैतवनं प्रेषयितुम् अनुमन्यते इत्यत्र मम विश्वासः नास्ति । यतः सः पाण्डवानां दुःस्थितिं ज्ञात्वा पश्चात्तापम् अनुभवन् अस्ति इति इदानीम् एव भवद्भ्याम् उक्तम् । अतः पाण्डवानां कष्टं साक्षात् दृष्ट्वा आनन्दम् अनुभोक्तुम् अन्यः कश्चन योग्यः उपायः अन्वेष्टव्यः । एतद्विषये भवन्तौ दुःशासनेन सह समालोचनं कृत्वा योग्यम् उपायं चिन्तयित्वा श्वः मां सूचयताम् । अस्माकं प्रयाणं भीष्मेण अपि अङ्गीकरणीयम् । मम पिता भीष्मः च यथा अङ्गीकुर्याताम्, तादृशः मार्गः अन्वेष्टव्यः'' इति उक्त्वा तौ




प्रेषितवान् ।

अनन्तरदिने कर्णः आगत्य शकुनि-दुश्शासनयोः सम्मुखम् दुर्योधनम् उक्तवान् - ''भवतां गोसमूहः द्वैतवने अस्ति। क्रूरमृगेभ्यः तेषां भीतिः यथा न स्यात् तथा तेषां रक्षणं भवतः कर्तव्यम् । एतत्कार्यनिमित्तं द्वैतवनं गच्छामः इत्युक्ते वृद्धराजः अवश्यम् अङ्गीकरिष्यति एव । वयं द्वैतवनं गत्वा कोलाहलं कृत्वा पाण्डवान् भाययाम'' इति ।

सर्वेऽपि करताडनपूर्वकं कर्णस्य उपायं प्रशंसितवन्तः । ते अनुक्षणं कञ्चन गोपालकम् आहूय उक्तवन्तः - ''भवान् अस्माभिः सह राज्ञः समीपम् आगत्य 'अस्माकं गोसमूहः द्वैतवने चरन् अस्ति इति, सः क्रूरमृगेभ्यः भीतः अस्ति इति च वदतु'' इति ।

गोपालकः तैः दुर्नीतिभिः सह धृतराष्ट्रस्य समीपं गत्वा - ''प्रभो ! अस्माकं गावः इदानीं द्वैतवने चरन्तः सन्ति। तस्मिन् प्रदेशे सारयुक्तः तृणराशिः अस्ति । किन्तु तत्र क्रूरमृगाणां बाधा अत्यधिका । अतः शीघ्रम् एव क्रूरमृगेभ्यः तेषां रक्षणं करणीयम् अस्ति । एतत् ज्ञापयितुम् एव अहम् अत्र आगतवान्'' इति उक्तवान् ।

तदा कर्णः शकुनिः च धृतराष्ट्रम् उक्तवन्तौ - ''दुर्योधनः तत्र गत्वा मृगयया क्रूरमृगान् मारयति चेत् गावः विना भितिं सुखेन तिष्ठेयुः । न केवलं तावत्, गोवत्सान् चिह्नेन अङ्कयित्वा तेषां पोषणव्यवस्थाम् अपि कृत्वा आगन्तुं शक्यते'' इति ।

एतत् वचनं श्रुत्वा धृतराष्ट्रः उक्तवान् - ''क्रूरमृगेभ्यः गोरक्षणम् उत्तमं कार्यं चेदपि अस्मिन् काले द्वैतवनं प्रति भवतां गमनम् उचितम् इति न भाति । द्यूतक्रीडायां पराजयं प्राप्य वनवासम् अनुभवन्तः पाण्डवाः तस्मिन् एव वने सन्ति । भवन्तः तत्र गच्छन्ति चेत् कोऽपि अनर्थः सम्भवेत् । अत्र भवन्तः भागिनः न चेदपि भवताम् अपकीर्तिः तु भवेत् एव । सर्पद्वेषसदृशः भीमस्य द्वेषः । द्रौपदी अपि तादृशी एव । अपि च भवताम् अपि विवेचनारहितः स्वभावः । भवतां मध्ये यदि कलहः जायते, तर्हि निश्चयेन महान् अनर्थः सम्भविष्यति । एतेषु दिनेषु अर्जुनः स्वर्गं गत्वा दिव्यास्त्राणि प्राप्य आगतवान् इति

श्रूयते । भवन्तः तस्य समानाः भवितुं न शक्नुवन्ति । अतः एतस्मिन् प्रसङ्गे गोरक्षणार्थं भवतां गमनं मास्तु । अन्यं कञ्चित् प्रेषयन्तु'' इति ।

तदा शकुनिः - ''वयं कोलाहलं न आचरामः । अन्यच्च पाण्डवानां निवासस्थानं वयं नैव गच्छामः । कानिचन दिनानि यावत् गोरक्षणं कुर्वन्तः वनविहारं कृत्वा प्रत्यागमिष्यामः । पाण्डवाः अपि धर्मात्मानः । युधिष्ठिरस्य वचनम् उल्लङ्घ्य ते अनर्थकारि कार्यं न आचरन्ति । युधिष्ठिरः तु साक्षात् धर्मस्वरूपः एव । अतः अनर्थकारिणी घटना न सम्भवेत् एव'' इति उक्तवान् ।



धृतराष्ट्रः शकुनेः वचने विश्वस्य - ''एवं तर्हि भवन्तः मृगयार्थं गत्वा आगच्छन्तु'' इति उक्तवान् ।

एतस्मात् अतीव सन्तुष्टः दुर्योधनः कर्ण-शकुनि-दुश्शासनादीन्, कांश्चन पुरजनान्, तेषां पत्नीः च स्वीकृत्य घोषयात्रार्थं प्रस्थितः । सहस्रसंख्याकाः रथाः, गजाः, अश्वाः, सैनिकाः, व्याधाः, वन्दिमागधाः च तम् अनुसृतवन्तः । यात्रार्थम् आवश्यकानि सर्वविधानि युद्धवस्तूनि शकटद्वारा सैनिकैः नीतानि ।

केषुचित् एव दिनेषु सर्वे द्वैतवनं प्राप्य तत्र वासम् आरब्धवन्तः । तत्र गोसमूहं परीक्ष्य धेनूनां वृषभाणां महिषीणां च पृथक् गोष्ठव्यवस्था कृता । गवाम् उपरि चिह्नानि कृतानि । गोरक्षकेभ्यः सूचनाः दत्त्वा, तेभ्यः उपायनानि दत्तानि । तेषां विनोद-पूर्वकनृत्यगानादिकं दृष्ट्वा सर्वे अतीव सन्तुष्टाः । शिबिरं प्रति आवश्यकं दधिक्षीरादिकं प्रभूतरूपेण लभ्यते स्म । व्याधाः मृगयां कृत्वा विविधानि मांसानि आनयन्ति स्म ।

दुर्योधनः महिलाभिः, बालैः, स्नेहितैः च सह वनविहारं कुर्वन् वनसौन्दर्यम् आस्वादितवान् । अनन्तरं द्वैतवनस्य मध्यभागे विद्यमानस्य कस्यचित् तटाकस्य समीपे वासम् आरब्धवान् ।

दुर्योधनस्य आज्ञानुसारं तदीयाः अनुचराः तटाकस्य एकस्मिन् तीरे कुटीरनिर्माणम् आरब्धवन्तः । एतत् दृष्ट्वा तटाकरक्षकाः गन्धर्वयोधाः दुर्योधनस्य अनुचरान् उक्तवन्तः - ''अत्र केनापि वासः न करणीयः इति अस्माकं राज्ञः आज्ञा अस्ति । भवन्तः अन्यत्र कुत्रापि कुटीरं



निर्माय सुखेन वसन्तु'' इति ।

सेवकानां द्वारा एतत् ज्ञात्वा दुर्योधनः सैनिकान् आहूय आज्ञापितान् यत् गन्धर्वयोधाः इतः प्रेषणीया इति । सैनिकाः गन्धर्वयोधानां समीपं गत्वा - ''महाराजः दुर्योधनः अत्र विहारार्थम् आगतवान् अस्ति । अत्र विघ्नकरणं सर्वथा अनुचितम् । अतः प्रथमम् इतः निर्गच्छन्तु भवन्तः । नो चेत् भवतः सर्वान् मारयिष्यामः वयम्'' इति भायितवन्तः ।

तदा गन्धर्वयोधाः मन्दहासपूर्वकम् उक्तवन्तः - ''किं भवन्तः अस्मान् जानन्ति ? वयं सामान्याः न । अस्माकं राजा गन्धर्वराजः चित्रसेनः । वयं सौहार्देन एव वदामः यत् - भवन्तः एतं प्रदेशं विहाय युधिष्ठिरस्य आश्रमस्य समीपे, अन्यत्र वा कुटीरं निर्मान्तु इति । एषः प्रदेशः अस्माकं राज्ञः विहारप्रदेशः'' इति । एतं विषयं सैनिकाः दुर्योधनं निवेदितवन्तः ।

एतत् श्रुत्वा दुर्योधनः रोषेण - ''माम् एव आज्ञापयतः तस्य गन्धर्वस्य कियत् धैर्यम् ?'' इति वदन् गन्धर्वाणाम् उपरि आक्रमणार्थं स्वसैन्यं प्रेषितवान् ।

अत्रान्तरे गन्धर्वाः चित्रसेनस्य अनुमतिं स्वीकृत्य दुर्योधनस्य सैनिकान् नाशितवन्तः । एतत् सर्वं दूरात् एव पश्यन् आसीत् कर्णः । सः दुर्योधनात् प्रशंसाम् इच्छन् गन्धर्वाणाम् उपरि आक्रमणं कृत्वा कांश्चन योधान् मारितवान् । तावता सहस्रसंख्याकाः गन्धर्वाः कर्णम् आक्रान्तवन्तः । एतत् दृष्ट्वा दुर्योधनस्य सहोदराः कर्णस्य साहाय्यर्थं गतवन्तः । लघुकलहरूपेण आरब्धं घर्षणं घोर-युद्धरूपेण परिणतम् अभवत् । अनन्तरं चित्रसेनः स्वयं युद्धार्थम् आगतवान् ।

चित्रसेनेन यदा मायायुद्धम् आरब्धं, तदा दुर्योधनस्य सैनिकाः ततः पलायितवन्तः । दुर्योधनस्य अनुजाः सैनिकानां पलायनं निवारयितुं यत्नं कृतवन्तः । कर्णः धैर्येण युद्धं कुर्वन् आसीत् । किन्तु गन्धर्वसैनिकाः तदीयं रथं नाशितवन्तः । कर्णः विकर्णस्य रथम् आरुह्य ततः पलायितः । दुर्योधनः गन्धर्वाणाम् अधीनः जातः । चित्रसेनः दुर्योधनं बद्ध्वा स्थापितवान् । एतत् दृष्ट्वा गन्धर्वयोधाः दुर्योधनस्य सहोदरान्, तेषां पत्नीः च बन्धने स्थापितवन्तः ।

गन्धर्वैः बद्धा नीयमानं दुर्योधनं दृष्ट्वा कौरवसैनिकाः युधिष्ठिरस्य आश्रमं गत्वा तं

प्रार्थितवन्तः - ''महात्मन् ! सपत्नीकान् कौरवान् बद्ध्वा गन्धर्वाः गन्धमादनप्रदेशं प्रति नयन्तः सन्ति । कृपया तान् विमोचयतु भवान्'' इति ।

एतत् श्रुत्वा भीमः उक्तवान् - ''यत् करणीयं तत् गन्धर्वैः एव कृतम् । महत् सैन्यं सज्जीकृत्य युद्धं करणीयं इदानीम् । कष्टे सतां सज्जनानां रक्षणं देवः एव करोति'' इति ।

तदा भीमं निवारयन् युधिष्ठिरः उक्तवान् - ''एवं वक्तुम् एषः समयः उचितः न । कौरवाः इदानीम् अस्मान् शरणम् आगताः सन्ति । तेषां रक्षणम् अस्माकं धर्मः । अस्माकं दायादस्त्रीणाम् अपमाननम् अस्माकम् अपि अपमाननाय एव । अहं यज्ञदीक्षायाम् अस्मि । अतः भवान्, अर्जुनः, नकुलः, सहदेवः च अन्यैः परिवारजनैः सह गन्धर्वान् अनुसृत्य गत्वा कौरवस्त्रीणां विमोचनं कुर्वन्तु । अविवेकेन गन्धर्वैः सह युद्धं मा कुर्वन्तु । समाधानचित्ताः सन्तः एव कार्यं साधयन्तु । तत् न शक्यं चेत् एव युद्धं करणीयम् । दायादानाम् अस्माकं मध्ये यदि कलहः भवति, तर्हि वयं पञ्च, ते शतं जनाः । अन्यजनैः सह कलहः चेत् वयं पञ्चोत्तरशतं जनाः इति सदा स्मरणीयं भवद्भिः'' इति ।

एतत् श्रुत्वा अर्जुनः - ''भवतः वचनानुसारम् एव वयं व्यवहरामः'' इति उक्त्वा भीम-नकुल-सहदेवैः सह युद्धार्थं सिद्धः सन् वेगगामिनः रथान् आरुह्य गन्धर्वान् अनुसृत्य प्रयाणम् आरब्धवान् । कौरवसैनिकानां प्राणाः आगताः इव ।



पाण्डवाः अनुसृत्य आगच्छन्तः सन्ति इति ज्ञात्वा गन्धर्वाः स्थितवन्तः । अर्जुनः तेषां समीपं गत्वा - ''हे गन्धर्वाः, भवद्भिः नीयमानः दुर्योधनः अस्माकं सहोदरः । तं त्यजन्तु कृपया । एषः मम अग्रजस्य युधिष्ठिरस्य आशयः'' इति उक्तवान् ।

''एवम् आचरणीयम् इति देवेन्द्रेण आज्ञप्ताः वयम् । तस्य आज्ञापालनम् अस्माकं कर्तव्यम्'' इति उक्तवन्तः गन्धर्वाः ।

''स्त्रीणां बन्धनं गन्धर्वराजस्य न शोभते । दुर्योधनम् अन्यान् च विमोचयन्तु कृपया । एतत् भवन्तः न अनुमन्यन्ते चेत् युद्धं कृत्वा वा वयम् अस्मदीयानां सर्वेषां विमोचनं निश्चयेन साधयिष्यामः'' इति उक्तवान् अर्जुनः ।

गन्धर्वाः अपि युद्धार्थं सन्नद्धाः । पाण्डवानां गन्धर्वाणां च मध्ये युद्धम् आरब्धम् । दुर्योधनादयः यथा गृहीताः, तथैव पाण्डवाः अपि ग्रहीतव्याः इति विचिन्त्य गन्धर्वाः पाण्डवानाम् उपरि आक्रमणं कृतवन्तः । किन्तु तेन किमपि प्रयोजनं न जातम् । अर्जुनः स्वबाणैः गन्धर्वसैनिकान् बहुधा घातितवान् । गन्धर्वैः प्रयुक्तान् बाणान् मध्येमार्गम् एव सुलभतया निवारयति स्म अर्जुनः ।

युद्धे प्रचलति सत्येव चित्रसेनः अर्जुनम् उद्दिश्य – ''अर्जुन ! माम् न अभिज्ञातवान् वा भवान् ? अहं भवतः स्नेहितः चित्रसेनः । दुष्टः एषः दुर्योधनः भवतां पुरतः स्ववैभवं प्रदर्श्य भवतां मनः खेदयितुं घोषयात्राव्याजेन सपरिवारं द्वैतवनम् आगतवान् अस्ति । एतत् ज्ञात्वा देवेन्द्रः 'कौरवान् सर्वान् गृहीत्वा आगच्छतु' इत्युक्त्वा मां प्रेषितवन् अस्ति । अतः अहम् आगतः अस्मि'' इति उक्तवान् ।

तदा अर्जुनः उक्तवान् – ''अयं दुर्योधनः दुष्टः एव स्यात् नाम । किन्तु सः अस्माकं दायादः । एतस्य विमोचनार्थम् अहम् अग्रजेन युधिष्ठिरेण आज्ञप्तः अस्मि । आज्ञापालनं मम धर्मः । भवतः मित्रं शिष्यः च अहम् एवंप्रकारेण भवन्तं सविनयं प्रार्थयामि'' इति ।

एतत् अङ्गीकृत्य चित्रसेनः अर्जुनादिभिः सह आश्रमं गत्वा प्रवृत्तं सर्वं युधिष्ठिरं निवेदितवान् । सर्वं श्रुत्वा युधिष्ठिरः – ''गन्धर्वराज ! भवद्भिः दुर्योधनः न मारितः यत् तत् अस्माकं सौभाग्यम् एव । महतः अनर्थात् अस्माकं वंशः रक्षितः अभवत् । भवतः दर्शनात् अहम् अतीव सन्तुष्टः । दुर्योधनादीन् इदानीम् एव विमोचयतु कृपया'' इति प्रार्थितवान् ।

युधिष्ठिरस्य वचनानुसारं चित्रसेनः कौरवाणां सर्वेषां विमोचनं कृत्वा युधिष्ठिरादीनाम् अनुज्ञां प्राप्य स्वपरिवारेण सह स्वर्गं प्रति गतवान् ।

अनन्तरं युधिष्ठिरः दुर्योधनं स्वसमीपम् आहूय – ''वत्स ! इतःपरं कदापि एतादृशम् अकार्यं मा करोतु । तेन भवान् सुखं न प्राप्नोति । प्रवृत्तं सर्वं विस्मृत्य सपरिवारम् अन्तःपुरं गच्छतु इदानीम्'' इति उक्तवान् ।

– (अनुवर्तते)



# र स वा र्ताः

## मदर् तेरेसावर्यायाः मूल्याङ्कः

मदर् तेरेसावर्या १९७९ तमे वर्षे नोबल्शान्तिप्रशस्तिं प्राप्तवती । १९८० तमे वर्षे अस्माकं सर्वकारेण सा श्रेष्ठया 'भारतरत्न'-नामिकया प्रशस्त्या सम्मानिता । अनन्तरं तेरेसावर्यायाः गौरवसूचकस्य मूल्याङ्कस्य अपि विमोचनं जातम् । नोबल्प्रशस्तिप्राप्त्यनन्तरं स्वीडन्देशः तस्याः नाम्नि मूल्याङ्कानां विमोचनम् अकरोत् । विश्वे एव प्राचीनतमं गणराज्यम् इति प्रसिद्धिं गतं मध्य-इटलीदेशस्य शान्मेरिनोवु-नामकं गणराज्यं मदर् तेरेसावर्यायाः गौरवार्थं 'युरोपा'नामकस्य मूल्याङ्कस्य विमोचनं कृतवत् अस्ति । एतस्मिन् मूल्याङ्के तेरेसावर्यायाः भावचित्रं




नास्ति, अपि तु प्रसिद्धया चलनचित्रनट्या नीनालोल्लोब्रिगिडावर्यया लिखितं तेरेसाचित्रं तस्याः हस्ताक्षरेण सह मुद्रितम् अस्ति । 'मदर् तेरेसा डी कलकत्ता' नाम्नि स्थितस्य एतस्य मूल्याङ्कस्य मूल्यं ७५० लीरा । १९७५ तमे वर्षे अन्ताराष्ट्रिय-आहारसंस्थया निर्मिते सिरिन्पदके अपि तेरेसावर्यायाः चित्रम् अस्ति । 'सर्वेभ्यः आहारः' इति लक्ष्यं मनसि निधाय दारिद्र्यनिवारणार्थं ये परिश्रमं कुर्वन्ति, तेभ्यः एतत् पदकं दीयते ।

## छात्राणां संख्या प्रवृद्धा

कलकत्तायाः सौत्पायिण्ट् उन्नतपाठशाला ४३ वर्षेभ्यः पूर्वम् आरब्धा । १९४५ तमे वर्षे यदा सा शाला आरब्धा तदा छात्राणां संख्या १७ आसीत् । सम्प्रति तस्यां पाठशालायां सामान्यतः १२,००० पठन्तः सन्ति ।

## चलनचित्रव्यामोहः

मिथुन्देवाङ्गन्नामकः मुम्बयीनगरे कस्मिंश्चित् प्रसिद्धे उपाहारमन्दिरे पाचकः । एतेषु दिनेषु यशस्विरूपेण बहूनि दिनानि यावत् प्रचलितं किञ्चन चलनचित्रम् एकस्मिन् एव चलनचित्रमन्दिरे २००वारं दृष्टवान् अस्ति एषः महानुभावः मिथुन् देवाङ्गन् । इदानीम् अपि सः विरामकाले तत् चित्रं तदा तदा पश्यति ।

## पूर्णिमादिने क्रिस्मस्

क्रिस्मस्-पूर्णिमादिनयोः मेलनम् अतीव विरलम् । गतडिसेम्बर्मासे यः क्रिस्मस्-उत्सवः प्रवृत्तः, सः तादृशः विशिष्टः आसीत्, यत् तद्दिने एव पूर्णिमा अपि आसीत् । गतेषु २० शतकेभ्यः एतादृशक्रिस्मस् ७० वारम् आगतम् । २० शतके ५ वारं तन्नाम, १९०१, १९२०, १९३१, १९७७, १९९६ वर्षेषु पूर्णिमा-क्रिस्मस्-मेलनम् आसीत् । पुनः पूर्णिमायाः कौमुद्यां क्रिस्मस्-आचरणार्थम् इतोऽपि १९ वर्षाणि तन्नाम २०१५ पर्यन्तं प्रतीक्षा करणीया ।

# भल्लातकवृक्षः

भल्लातकबीजस्य तैलस्य च वाणिज्ये प्रपञ्चे एव अस्माकं देशः प्रथमस्थाने अस्ति । ९०% वाणिज्यम् अस्माकं देशतः एव प्रचलति ।

सामान्यतः चतुश्शतवर्षेभ्यः पूर्वं पोर्चुगीसाः भल्लातकसस्यम् अस्माकं देशम् आनीतवन्तः । दक्षिणभारते सर्वत्र भल्लातकाः वर्धन्ते । तत्रापि मुम्बयीतः कन्याकुमारीपर्यन्तं स्थितेषु पश्चिमतीर-प्रदेशेषु समृद्धरूपेण वर्धन्ते । अस्माकं देशे आहत्य भल्लातकस्य उत्पादनं यत् भवति, तत्र ७०% पश्चिमतीरप्रदेशेषु एव वर्धते । एतस्य वर्धनार्थं सामान्य-उष्णशीतप्रदेशः आवश्यकः । मरुभूमिः एतस्य वर्धनार्थम् उत्तमा भवति ।

एषः वृक्षः १५ मीटर्-उन्नतं वर्धते । ३०-४० वर्षाणि यावत् जीवति च । एतस्य पर्णानि विशालाकारकाणि मृदूनि च भवन्ति । पीतमिश्रितहरित-रक्तवर्णीय-पुष्पाणि गुच्छरूपेण डिसेम्बर्-मार्च्मासयोः मध्ये भवन्ति । मार्च्मासे शलाटवः उत्पद्यन्ते । ६०-७० दिनेषु शलाटवः पक्वतां प्राप्नुवन्ति । भल्लातकबीजं फलात् बहिर्भागे भवति इति यत् एतत् वृक्षशास्त्रे एव वैचित्र्यपूर्णः अंशः । बीजं परितः यः घनमयः सारः भवति सः पक्वतासमये हरितवर्णतां प्राप्नोति । अनन्तरं धूसरवर्णतां प्राप्नोति । जनाः भल्लातकफलानि अपि खादन्ति । सामान्यतः एकः वृक्षः सकृत् फलितः चेत् ३०-३५ कि. ग्राम् बीजानि उत्पादयति । भल्लातकबीजे विटमिन् 'ए' इत्यादयः शक्तिवर्धकाः अंशाः प्रभूतरूपेण भवन्ति । एतस्य बीजानि पक्वानि अपक्वानि च खादन्ति जनाः ।

बङ्गालीभाषया एतत् 'हिज्लीबादाम्' इति, हिन्दी-मराठी-गुजरातीभाषाभिः 'काजा' इति, तमिळुभाषया 'मुन्दरि' इति, मलयाळभाषया काषु-अण्डि इति, तेलुगुभाषया 'मुन्तमामिडि' इति च उच्यते ।

भल्लातकबीजस्य उपरितनत्वक्तः यत् तैलम् उत्पाद्यते तस्य बहुमूल्यम् अस्ति वाणिज्यक्षेत्रे । भल्लातकवृक्षस्य काण्डभागः नौकानिर्माणार्थं, पेटिकानिर्माणार्थं च उपयुज्यते ।



अस्मद्देशीयाः ऋषयः –

# वालखिल्याः

तपःशक्तेः सम्पादनार्थं देहदार्ढ्यम् आवश्यकम् एव इति नास्ति । एतं विषयं निरूपितवन्तः वालखिल्याः सप्तऋषिषु अन्यतमस्य क्रतुऋषेः पुत्राः । अङ्गुष्ठ-परिमाणकशरीरवन्तः एते ६० सहस्र-संख्याकाः आसन् । एते सर्वे अपि अधश्शिरस्काः सन्तः कस्मिंश्चित् वृक्षे लम्बमानाः तपः आचरन्ति स्म ।

कदाचित् कश्यपप्रजापतिः कश्चित् यज्ञम् आरब्धवान् । इन्द्रादिदेवताः मुनिवराः च तस्य यज्ञस्य साहाय्यम् आचरन्ति स्म । यथाशक्ति साहाय्यं करणीयम् इति विचिन्त्य वालखिल्याः अपि यज्ञार्थम् आवश्यकानि समिधः पुष्पाणि च सङ्गृह्य आनीतवन्तः । अङ्गुष्ठपरिमाण-शरीरवन्तः ते मुनिकुमाराः वालखिल्याः समिधां पुष्पाणां च सङ्ग्रहणसमये पतन्ति स्म, पुनः उत्थाय गच्छन्ति स्म । एतत् दृष्ट्वा इन्द्रः उपहासपूर्वकम् उच्चैः हसितवान् । एतस्मात् खिन्नाः कुपिताः च वालखिल्याः अहङ्कारिणः इन्द्रस्य प्रतिस्पर्धी अन्यः कश्चन इन्द्रः स्रष्टव्यः इति सङ्कल्प्य तपः आरब्धवन्तः ।

एतस्मात् भीतः देवेन्द्रः – 'वालखिल्यानां तपः स्थगयतु' इति कश्यपं प्रार्थितवान् । कश्यपस्य हितवचनानुसारं वालखिल्याः कृतं सङ्कल्पं परित्यक्तवन्तः । तथापि तावत्पर्यन्तं कृतस्य तपसः व्यर्थता न स्यात् खलु ? अतः तस्य फलं कश्यपः, विनतायाः पुत्रः गरुडः च विभज्य स्वीकृतवन्तौ ।

कानिचन दिनानि अतीतानि । कदाचित् गरुडः अमृतस्य आनयनार्थं स्वर्गं गतः आसीत् । गरुडस्य निवारणार्थम् आगतः इन्द्रः पराजितः अभवत् । एवंप्रकारेण तपोधनानां वालखिल्यानाम् आशयः अपि किञ्चित्प्रमाणेन पूरितः अभवत् ।

कदाचित् गरुडः विश्रान्त्यर्थम् अकस्मात् कञ्चित् वृक्षम् आश्रितवान् । तस्मिन् एव वालखिल्याः ध्यानमग्नाः आसन् इति विषयं सः न लक्षितवान् । वृक्षशाखा भारवशात् भग्ना जाता । तदा वालखिल्याः गरुडस्य दृष्टिगोचरीभूताः अभवन् । एतत् ज्ञात्वा गरुडः वालखिल्याः यथा अधः न पतेयुः तथा भग्नां वृक्षशाखां पादाङ्गुष्ठेन गृहीत्वा आकाशे एव भ्रमणम् आरब्धवान् । अनन्तरं कश्यपस्य अभिप्रायानुसारं वालखिल्यानां तपोभङ्गः यथा न स्यात्, तथा तां शाखां जागरूकतया गन्धमादनपर्वते अवतारितवान् ।



# भवन्तः जानन्ति वा ?

१. सः राजवंशः कः, यश्च ३०० वर्षाणाम् अपेक्षया अपि अधिककालं रशियादेशं पालितवान् ?
२. षिण्टोमतानुयायिनः कस्य देशस्य जनाः ?
३. विश्वसंस्थायाः लाञ्छने स्थिताः वर्णाः के ?
४. तिमिङ्गिलस्य कति दन्ताः भवन्ति ?
५. 'पवित्रबैबल्'ग्रन्थः कस्मात् वर्षात् व्यवहारपथम् आगतः ?
६. 'दंबे'नदी केन समुद्रेण सङ्गता भवति ?
७. अस्माकं देशे उन्नतप्रदेशे विद्यमानः मार्गः कः ?
८. पक्षिणां दन्ताः भवन्ति वा ?
९. सप्त ऋषयः के ?
१०. आर्यभटः कः ? कस्मिन् विषये सः प्रसिद्धः ?
११. अस्माकं देशे राज्यपालपदवीम् अलङ्कृतवती प्रथमा महिला का ?
१२. 'वीरभद्रविजय'नामकं तेलुगुकाव्यं केन रचितम् ?
१३. भारतस्य प्रथमः वैस्राय् कः ?
१४. तिरुवल्लुवर्वर्येण रचितस्य 'तिरुक्कुरळ्'नामकस्य प्रसिद्धग्रन्थस्य त्रयः भागाः के ?
१५. फ्रेञ्चविद्रोहस्य घोषणं किम् ?
१६. विम्बल्डन्प्रशस्तिविजेत्री प्रथमा निग्रोमहिला का ?

## उत्तराणि

१. रोमन्वेलः ।
२. जपान्देशीयाः ।
३. नीलः, श्वेतः च ।
४. २०० ।
५. १६११ वर्षात् ।
६. कृष्णसमुद्रेण ।
७. जम्मु-कश्मीरस्थः लेहातः लोयपर्यन्तं विद्यमानः १८३०० पाद-परिमितौन्नत्ययुतः मार्गः ।
८. न ।
९. अत्रिः, आङ्गिरसः, क्रतुः, मरीचिः, पुलहः, पुलस्त्यः, वसिष्ठः ।
१०. चन्द्रगुप्तविक्रमादित्यकालिकः प्रसिद्धः गणितशास्त्रज्ञः (क्रि.श. ४७६-५२०) भौगोलिकशास्त्रज्ञः च । एतेन शून्यस्य महत्त्वम् आविष्कृतम् ।
११. सरोजिनीनायडु ।
१२. ओम्मेरपोतनवर्येण ।
१३. लार्ड् क्यानिङ्ग् ।
१४. धर्मः, अर्थः, कामः च ।
१५. स्वातन्त्र्यं, समानता, सुभ्रातृत्वं च ।
१६. अमेरिकादेशीया आल्थिया गिब्सन् 'विमेन् सिंगल्स्' प्रशस्तिं १९५६-५७ तमे वर्षे प्राप्तवती ।



# मान्त्रिकः महाकालः

मणिपुरग्रामे पार्वती नाम काचित् स्त्री आसीत् । तस्याः पतिः कृषिकार्यं करोति स्म । तयोः सुन्दराः त्रयः पुत्राः आसन् । पार्वती श्वशुरं श्वश्रूं च पितरौ इव पश्यति स्म । श्रद्धया तयोः सेवां करोति स्म । गृहकार्याणि अपि सा श्रद्धया करोति स्म । एवं कालः सुखेन गतः ।

अथ कदाचित् पार्वती ज्वरपीडिता अभवत् । ''लङ्घनं परमौषधम्'' इति धिया कोऽपि तस्यै आहारम् एव न दत्तवान् । तेन दिने दिने तस्याः निश्शक्तता प्रवृद्धा । अन्ते गृहजनाः अनिवार्यतया एकम् आयुर्वेद-पण्डितम् आनीतवन्तः । तेन अपि किमपि प्रयोजनं न सिद्धम् ।

एवं स्थिते अनाहूतः अपि महाकालः नाम मान्त्रिकः तत्र आगत्य पार्वतीं परीक्षितवान् । अनन्तरं सः तस्याः पतिम् उक्तवान् - ''भवतः पत्नी ज्वरपीडिता नास्ति, अपि तु भूतपीडिता अस्ति । या पिशाची तां गृहीतवती सा न अन्या, अपि तु पिशाचत्वं प्राप्तवती अस्माकं ग्रामस्य पद्माम्बा एव'' इति ।

तदा पद्माम्बायाः नाम श्रुत्वा तत्रत्याः सर्वे अपि भीताः अभवन् । षड्भ्यः मासेभ्यः पूर्वं जलम् आनेतुं गता पद्माम्बा न प्रत्यागता आसीत् । दिनत्रयानन्तरं तस्याः शवः कूपे दृष्टः आसीत् जनैः । एतत् दृष्ट्वा ग्रामस्थाः केचन 'सा आत्महत्यां कृतवती' इति, पुनः केचन 'पादस्खलनेन सा कूपे पतित्वा मृता' इति च उक्तवन्तः आसन् ।

''एवं तर्हि पद्माम्बा पिशाचीरूपेण अस्ति वा ?'' इति पार्वत्याः पतिः पृष्टवान् ।

तदा महाकालः - ''अथ किम् ? ग्रामस्य पूर्वदिशि स्थिते कूपे पतिताः अवश्यं पिशाचरूपं प्राप्नुवन्ति इति

शास्त्राणि वदन्ति । अतः पद्माम्बा पिशाचरूपं प्राप्तवती इत्यत्र नास्ति सन्देहः'' इति उक्त्वा ततः गतवान् एव ।

पार्वत्याः भूतावेशः अस्ति इति महाकालः यदा उक्तवान् ततः आरभ्य जनाः पार्वत्याः देहे भूतावेशसम्बद्धानि चिह्नानि दृष्टवन्तः । निश्शक्ता पार्वती कदाचित् बालानां कोलाहलम् असहमाना क्रोधेन तर्जयति स्म । तस्याः तर्जनं भूतचेष्टावशात् इति जनाः भावयन्ति स्म ।

किन्तु तस्य ग्रामस्य पुरोहितः रामशास्त्री पार्वत्याः पतिम् अवदत् - ''एतत् सर्वं भूतचेष्टा नास्ति । उत्तमाहाराभावेन निश्शक्ता सा एवं करोति । यदि भवान् उत्तमम् आहारं ददाति तर्हि सा यथापूर्वं स्वस्था भविष्यति'' इति । किन्तु तस्य वचनं कोऽपि न अङ्गीकृतवान् ।

अन्ये बान्धवाः उपदेशं कृतवन्तः यत् आञ्जनेयस्य नामश्रवणेन एव भूत-पिशाचादयः दूरं गच्छन्ति इति । तत् श्रुत्वा गृहजनाः रामायणस्य पुत्थलिकानाटकम् आयोजितवन्तः । वानरपालकम् आनाय्य वानरक्रिडाम् अपि आयोजितवन्तः ते । किन्तु ततः अपि किमपि प्रयोजनं न सिद्धम् ।

'सर्वं भूतचेष्टाकारणात् एव' इति चिन्तयित्वा पार्वत्याः पतिः, तदीयः अन्यः बान्धवः च महाकालस्य गृहं गतवन्तौ । तौ दृष्ट्वा महाकालः - ''भवन्तः अत्र नूनम् आगच्छन्ति इति अहं पूर्वम् एव चिन्तितवान् आसम् । यदि भवन्तः न आगमिष्यन् तर्हि अहम् एव तत्र आगमिष्यम् । यतः अहम् अस्य ग्रामस्य महान् भूतवैद्यः । यदि अहं तस्य भूतस्य चेष्टां न परिहरामि तर्हि मम एव अवमाननं खलु'' इति उक्तवान् ।

तदा पार्वत्याः पतिः भयेन उक्तवान् -





''महोदय ! आञ्जनेयस्वामिनं दृष्ट्वा अपि सा पिशाची मम पत्नीं न अत्यजत्'' इति ।

महाकालः - ''भोः, अयं लघुविषयः । एतस्य कृते आञ्जनेयः न आनेतव्यः । सः तु शकिनीडाकिनीप्रभृतीन् भयङ्करभूतान् निवारयति । पद्माम्बासदृशानां भूतानां कृते सः स्वशक्तेः उपयोगं न करोति । तं भवन्तः साहाय्यं प्रार्थितवन्तः यत् तत् भवताम् अज्ञानम् एव द्योतयति'' इति वदन् स्यूतं गृहीत्वा ताभ्यां सह प्रस्थितः ।

महाकालः पार्वत्याः गृहं प्रविशन्नेव मन्त्रम् उच्चारयन् स्यूततः हरिद्राचूर्णं, कुङ्कुमं, जम्बीरफलं च बहिः स्थापितवान् । अनन्तरं हरिद्राचूर्णेन कुङ्कुमचूर्णेन च रङ्गवल्लीं विरचय्य तस्मिन् एकम् आसनं स्थापितवान् । तस्मिन् आसने पार्वतीम् उपवेशितवान् । मन्दं मन्त्रम् उच्चारयन् निम्बवृक्षस्य शाखाः गृहीत्वा पार्वतीं ताडयितुम् उद्युक्तः अभवत् च ।

तस्मिन् एव समये पार्वत्याः कनिष्ठः भ्राता महेशः तत्र आगतः । सः नगरे अध्ययनं कृतवान् आसीत् । सोदर्याः अनारोग्यं ज्ञात्वा द्रष्टुम् आगतः आसीत् सः । महाकालस्य घोरं कार्यं दृष्ट्वा सः 'अलं ताडनेन' इति कोपेन गर्जितवान् ।

तदा महाकालः निम्बशलाकां दूरे क्षिप्त्वा महेशस्य मुखम् एव क्रोधेन पश्यन् - ''नगरे अध्ययनं बालकान् नाशयति । यस्मिन् दिने मम कार्यस्य विरोधः श्रूयते तस्मिन् दिने अहं मम कार्यं न अनुवर्तयामि । अतः श्वः अस्मिन् एव समये आगमिष्यामि'' इति उक्त्वा पार्वत्याः पतिम् उद्दिश्य - ''श्वः पाकार्थं पञ्च रूप्यकाणि, एकां कृष्णकुक्कुटीं चापि मम गृहं प्रति अविस्मृत्य प्रेषयतु'' इति सूचयित्वा स्यूतं स्वीकृत्य गतवान् ।

तस्मिन् दिने मध्याह्नकाले महेशः आवुत्तात् प्रवृत्तं सर्वं ज्ञातवान् ।

अनन्तरदिने महाकालः निम्बवृक्षस्य पत्राणां महाबन्धम् आनीतवान् । सर्ववस्तूनि भूमौ निक्षिप्य उच्चस्वरेण - ''हे पद्माम्बा-पिशाचि, मार्गे विद्यमान-माराम्बापिशाचि, घोरशत्रोः पीडनशील पापाम्बापिशाचि, ओः, भवानीपिशाचि, सावित्रीपिशाचि, सर्वाः अपगच्छन्तु'' इति उक्त्वा पार्वत्याः शिरसि निम्बपत्रबन्धं प्रसारितवान् ।

तस्मिन् एव क्षणे महेशः तिन्त्रिणीशलाकानिर्मितां सम्मार्जनीं गृहीत्वा

तं प्रकोष्ठं वेगेन प्रविश्य, महाकालं दृष्ट्वा - ''हे महाकाल ! अहं भवता आहूतेषु भूतेषु न अन्तर्भवामि । भागीरथीपिशाची अहम् । पद्माम्बापिशाची अपि मत्समा न भवति । यदा पद्माम्बा कूपे पतित्वा मरणं प्राप्तवती तदा भवान् तत्र एव स्थित्वा हसति स्म किल ? सा एव पद्माम्बा इदानीं भवतः गृहं दग्धुं गतवती अस्ति । सूर्योदयात् पूर्वम् एव भवान् एतं ग्रामं त्यक्त्वा गच्छतु । अन्यथा भवन्तम् एव पक्त्वा खादिष्यामि'' इति उच्चैः उक्तवान् ।

एतत् श्रुत्वा महाकालः मन्दं मन्दं द्वारसमीपं गच्छन् - ''क्षम्यतां, भागीरथी-देवि, क्षम्यताम्'' इति वदन् धावितुम् उद्युक्तः । तदा महेशः तं प्रतिरुध्य तिन्त्रिणी-शलाकासम्मार्जन्या सम्यक् ताडितवान् । महाकालः भीतः ततः धावितवान् ।

तत्रत्याः जना आश्चर्येण - ''किमिदं विचित्रम्'' इति वदन्तः परस्परं मुखम् अवलोकितवन्तः ।

श्रान्तः महेशः कलशपरिमितं जलं पीत्वा स्वसहोदर्याः मञ्चस्य समीपे उपविष्टवान् । आश्चर्यचकितः आवुत्तः तं पृष्टवान् - ''किं महेश ! पद्माम्बायाः ज्येष्ठभगिनी भागीरथी अपि पिशाचीरूपेण अस्ति वा ? किमर्थं वा भवन्तं गृहीतवती सा ?'' इति

तदा महेशः - ''आवुत्तमहाभाग, यदि जनाः भूतविषये विश्वसन्ति तर्हि मृताः सर्वे अपि पिशाचरूपं प्राप्तवन्तः इत्येव भासते । वस्तुतः आदिनं श्रमेण सर्वं कार्यं कुर्वत्या मम भगिन्या समीचीनः आहारः न लब्धः । अतः तस्याः अनारोग्यम् अभवत् । शीघ्रं भवतः पुत्रस्य विवाहं निर्वर्तयतु । तदा स्नुषा आगत्य एतस्याः साहाय्यं करिष्यति । अहं मम सहोदरीम् इदानीं नगरं नेष्यामि । तत्र श्रेष्ठवैद्यैः चिकित्सां कारयित्वा पुनः एनाम् आनेष्यामि । तदा एषा यथापूर्वं गृहकार्याणि कर्तुं शक्ता भविष्यति'' इति उक्तवान् ।

''वस्तुतः पिशाचभ्रान्त्या वयम् आविष्टाः आस्म । अतः एतत्सर्वं प्रवृत्तम् । इदानीम् अस्माकम् अज्ञानम् अपगतम् अस्ति । भवान् एतां नीत्वा यथायोग्यं चिकित्सां कारयित्वा प्रतिप्रेषयतु । भवता नितराम् उपकृताः वयम्'' इति कृतज्ञता-पूर्वकं महेशम् उक्तवान् तदीयः आवुत्तः ।





# परिहारमार्गः

कस्मिंश्चित् काले राघवेन्द्ररायः नलन्दस्य भूपतिः आसीत् । कदाचित् सः पुत्रस्य युवराजपट्टाभिषेकं कर्तुम् इष्टवान् । एतां वार्तां सर्वत्र प्रकटितवान् च । चतुर्दिनात्मकम् एतम् उत्सवं द्रष्टुम् उपायनानि प्राप्तुं च कवयः, पण्डिताः, पुरोहिताः, कलाकाराः च स्वबान्धवैः सह नलन्दं प्रति आगतवन्तः ।

भूपतिः एकैकस्यापि सामर्थ्यं मनसि निधाय सम्मान्यानाम् आवलीं सज्जीकृतवान् । तथैव आगतान् सर्वान् योग्यरीत्या सम्मानितवान् । श्रीरामशास्त्री नाम कश्चन पुरोहितः उदन्तपुरतः आगतवान् आसीत् । तस्य नाम श्रेष्ठपुरोहितानां सूच्यां न आसीत् । अपि तु सामान्यपुरोहितानाम् आवल्याम् आसीत् । एतत् दृष्ट्वा सः नितराम् असन्तुष्टः अभवत् ।

यदा तस्य अवकाशः आगतः तदा सः युवराजस्य समीपं गत्वा तेन दत्तानि चत्वारि नाणकानि स्वीकृत्य - ''प्रभो ! भवन्तः एतादृशम् उपायनं दद्युः इति अहं तु न निरीक्षितवान् । मम ग्रामे एव पञ्चाङ्गं गृहीत्वा गृहं गृहं गत्वा तिथिं, नक्षत्रं, वासरं च वदामि चेत् अपि एतस्य अपेक्षया अधिकं सम्पादयेयम् । मया उक्तम् अन्यथा न चिन्तनीयम् । भवान् अपि कस्यचित् ग्रामस्य पुरोहितः इति मत्वा एतत् उपायनम् आशीर्वादरूपेण भवते एव दत्त्वा प्रतिगमिष्यामि'' इति उक्त्वा 'शतमानं भवति .....' इति मन्त्रम् उक्त्वा प्राप्तम् उपायनं युवराजाय एव प्रत्यर्पितवान् ।

श्रीरामशास्त्रिणः अहङ्कारं दृष्ट्वा तत्र विद्यमानानां सर्वेषां कोपः आगतः । परन्तु भूपतिः शान्ततया - ''भूस्वामिनः नद्यः इव । आश्रितैः आनीतानि पात्राणि अनुसृत्य यथा नदी जलं ददाति, तथैव

तत्तस्य योग्यताम् अनुसृत्य उपायनानि दत्तानि सन्ति । जलं न्यूनम् आगतम् इत्यतः कोऽपि पात्रम् एव नद्यां न क्षिपति । भवतः अपराधः न क्षमार्हः'' इति उक्तवान् ।

एतत् श्रुतवतः श्रीरामशास्त्रिणः लज्जा अभवत् । सर्वेषां पुरतः सः भूपतिं क्षमां प्रार्थितवान् । भूपतिः तस्य सान्त्वनं कृत्वा 'श्रीरामशास्त्री सर्वेषु विषयेषु योग्यः' इति प्रशंसां कृत्वा योग्यरीत्या सत्कारं कृतवान् । अनन्तरं श्रीरामशास्त्री पट्टाभिषेकोत्सवं समाप्य एव स्वकीयं ग्रामम् आगतवान् ।

यद्यपि श्रीरामशास्त्रिणा अहङ्कारेण व्यवहृतम् आसीत्, तथापि दत्तम् उपायनं युवराजाय एव प्रत्यर्प्य तेन आशीर्वादः कृतः यत् स च उदन्तपुरग्रामे सर्वान् आकर्षत् । तस्य कारणतः श्रीरामशास्त्री ग्रामे प्रमुखेषु जनेषु अन्यतमः अभवत् । एतस्मात् कारणात् तस्य अहङ्कारः पुनरपि प्रवृद्धः । 'भूपतिम् एव धिक्कृत्य तस्मात् एव पुनः सम्माननं प्राप्तवान् अस्मि अहम्' इति तस्य भावना आसीत् ।

गच्छता कालेन सः विवाहे, व्रतपूजादिषु च धनिकनिर्धनभेदं विना सर्वेभ्यः अपि धनस्वीकरणप्रवृत्तिम् आरब्धवान् ।

अथ कदाचित् उदन्तपुरग्रामस्य कवेः तिरुमलेशस्य पिता दिवङ्गतः । एषः कविः तिरुमलेशः भूपतेः आश्रये आसीत् इति कारणात् भूपतिः अपि अपरकर्मकाले आगतवान् आसीत् । शोकतप्तं तिरुमलेशं दृष्ट्वा – ''भवान् पण्डितः । त्रिकालज्ञः । पितुः विरहः निश्चयेन आघातकरः एव । तथापि सर्वं विधिविलसितं मत्त्वा धैर्यं धर्तव्यम्'' इति उक्तवान् ।

तदा तिरुमलेशः – ''प्रभो ! एतत् गृहं मम पित्रा कष्टेन निर्मितम् । अतः अद्यपर्यन्तम् अपि अहं तम् अत्रैव अस्मिन्



गृहे एव मञ्चे शायितवान् आसम् । 'तस्य मरणकालिकं नक्षत्रं शुभकरं नास्ति । अतः गृहं मासत्रयं यावत् त्यक्तव्यम्' इति पुरोहितः उक्तवान् अस्ति । उत्तमानुत्तम-नक्षत्रभेदं गणयन्तः वयम् आत्मना निर्मिते गृहे एव वासं कर्तुम् अपि अनर्हाः जाताः स्मः खलु इति चिन्तयन् अस्मि'' इति उक्तवान् ।

भूपतिः तस्य सान्त्वनं कृत्वा सर्वान् ज्येष्ठान् श्रीरामशास्त्रिणं च मेलयित्वा - ''भवन्तः सर्वे मम एकं लघुसाहाय्यं कुर्युः । वास्तुशास्त्ररीत्या तिरुमलेशस्य गृहम् अत्युत्तमम् अस्ति । अत्र आगमनानन्तरं दीर्घकालतः अनुवृत्ता अशान्तिः निवारिता अभवत् । अत्र मया शान्तता प्राप्ता अस्ति । अतः अहम् एतेन कविना सह कानिचन दिनानि अत्र वासं कर्तुम् इच्छामि । किन्तु अत्र बाधा नाम - तिरुमलेशेन एतत् गृहं त्यक्तव्यम् इति भवतां वचनम् । एतस्य कोऽपि परिहारोपायः स्यात् वा इति चिन्तयन्तु भवन्तः'' इति प्रार्थितवान् ।

श्रीरामशास्त्री तत्र विद्यमानैः ज्येष्ठैः सह किञ्चित्कालं समालोच्य - ''प्रभो ! शास्त्राणि, आचरणानि च आपस्तम्भमुनेः कालात् अनुवर्तमानानि सन्ति । देशकालानुसारं तेषु परिवर्तनकरणं न दोषाय । भवतः अपेक्षां तिरस्कर्तुं वयं न इच्छामः । दोषपरिहारार्थं शास्त्रसम्मतः कश्चन मार्गः अस्ति एव । गृहे उदकशान्तिः कृता चेत् गृहं पुनः वासयोग्यं भविष्यति'' इति उक्तवान् ।

भूपतिः हसन् तत्क्षणे एव श्रीरामशास्त्रिणः नेतृत्वे उदकशान्तिं कारितवान् । ततः प्रतिगमनसमये श्रीराम-शास्त्रिणम् उद्दिश्य - ''अस्माकं बहवः आचाराः कालबाह्याः । किन्तु शास्त्रोक्तं वचनं तिरस्कर्तुं कोऽपि न अर्हति । अतः शास्त्रोक्तविषयेषु कालसम्मताः परिहार-मार्गाः पश्चाङ्गे लेखनीयाः'' इति उक्तवान् ।

एवं तिरुमलेशस्य गृहत्यागप्रसक्तिः अपगता अभवत् । रामशास्त्री च अन्यैः पण्डितैः सह समालोच्य शास्त्रोक्तविषयेषु सुलभमार्गान् चिन्तयित्वा पञ्चाङ्गे योजितवान् । तत् भूपतये प्रदर्श्य विशेष-पारितोषिकं प्राप्तवान् च ।





# श्रीरामस्य समस्या

शिवपत्तने श्रीरामः नाम कश्चन प्रसिद्धः वस्त्रवणिक् आसीत् । तस्य अनुरूपा अनुकूला च पत्नी, सुन्दरी पुत्री, युवकः पुत्रः च आसन् । श्रीरामः स्वपुत्रीं पार्श्वग्रामस्थस्य धान्यवणिजः शेषगिरेः पुत्राय दत्त्वा विवाहं निर्वर्तितवान् आसीत् ।

अनन्तरं सः स्वस्य वाणिज्यस्य भारं पुत्राय राधारमणाय अर्पितवान् । पुत्री तु पतिगृहे सुखेन वसति स्म । पुत्रः वाणिज्यभारं निर्वहति स्म । तदा श्रीरामः किं कुर्यात् ? सुखेन चिन्तां विना कालं यापयेत् किल ? किन्तु सः तथा न कृतवान् । गृहे एकस्मिन् प्रकोष्ठे उपविशन् सर्वदा त्रस्तः इव उपरि छदिं पश्यति स्म । क्रमेण तस्य निद्राहाराः अपि न्यूनाः अभवन् । भोजनम् अपि त्यक्तवान् सः । रात्रौ अपि निद्राम् अकृत्वा स्वयं किमपि स्वगतं वदति स्म । यदि पत्नी वा पुत्रो वा सम्भाषितुं प्रयत्नं कुरुतः तर्हि सः क्रुद्ध्यति स्म ।

श्रीरामस्य एतां परिस्थितिं दृष्ट्वा तस्य पत्नी अतीव विषण्णा अभवत् । तं परिक्षितुम् अनेकान् वैद्यान् अपि आनायितवती सा । वैद्याः तु सर्वविध-परीक्षाः कृत्वा - ''कोऽपि रोगः नास्ति एतस्य । आरोग्यं सम्यक् अस्ति'' इति उक्तवन्तः । तदा तस्य पत्नी चिन्तितवती - 'पिशाचानां पीडा स्यात् एषा' इति । अतः सा मान्त्रिकान् आनाय्य तायकं, रक्षा-बन्धकं च धारितवती । परन्तु ततः अपि किमपि प्रयोजनं न अभवत् । श्रीरामस्य अस्वास्थ्यं यथापूर्वम् अनुवर्तते स्म ।

अथ कदाचित् तीर्थयात्रां समाप्य आगतः पुत्र्याः श्वशुरः शेषगिरिः तस्य योगक्षेमादिकम् अपृच्छत् । तदा श्रीरामस्य पत्नी अश्रुपूर्णनेत्रा सती रुदती - ''भ्रातः,



भवतः बन्धुः एषः एषु दिनेषु विचित्रतया व्यवहरति । अनारोग्येण बाधितः अस्ति एषः । यदा वयम् एतं ग्रामम् आगताः तदा एषः मम पतिः वस्त्रबन्धं शिरसि स्थापयित्वा प्रतिग्रामं गत्वा वाणिज्यं करोति स्म । वयं सर्वे अपि लघुगृहे वसामः स्म । तथापि तानि दिनानि सुखमयानि आसन् । इदानीं सौभाग्येन सर्वम् अस्ति । वस्त्राणां बृहत् आपणः एव अस्ति । पुत्रः वाणिज्ये कुशलः अस्ति । पुत्री अपि भवतः गृहे सुखेन वसति । अतः एतेन निश्चिन्ततया भवितव्यम् आसीत् । किन्तु एषः सर्वदा विषण्णतया तिष्ठति'' इति उक्तवती । श्रीरामस्य दुरवस्थां विवृतवती च ।

एतत् सर्वं श्रुत्वा शेषगिरिः किञ्चित् आलोच्य उक्तवान् – ''किमपि न भवति भोः । चिन्ता मास्तु । भवतां ग्रहगतिः सम्यक् न स्यात् । किञ्चित्कालानन्तरं सर्वं सम्यक् भविष्यति । मम अपि विश्वासः अस्ति यत् भवतां गृहस्थितिः यथापूर्वं सम्यक् भविष्यति इति । अतः सधैर्यं स्थातव्यम्'' इति उक्त्वा स्वनगरं गतवान् ।

दश-पञ्चदशदिनानन्तरं एकस्मिन् दिने प्रातः एव श्रीरामस्य पुत्री स्ववस्तूनि स्वीकृत्य गृहम् आगतवती । तां दृष्ट्वा सर्वे अपि व्याकुलिताः अभवन् ।

माता तु – ''कः विषयः ? वत्से ! भवती किमर्थम् आगतवती ? पत्या सह कलहं कृतवती वा ?'' इति आतङ्कमिश्रित-स्वरेण पृष्टवती ।

तदा पुत्री दुःखेन – ''अम्ब, भवत्याः जामातुः विषये किं वा वदामि ? वाणिज्ये महतीं हानिम् अनुभूय चिन्ताक्रान्तः सः ऋणदातृभ्यः भीतः सन् गृहं त्यक्त्वा पलायितः । अपि च 'संन्यासं स्वीकरोमि' पुनः न आगमिष्यामि' इत्यपि पत्रं विलिख्य गतवान् अस्ति'' इति उक्तवती ।

एतत् सर्वं प्रकोष्ठस्थः श्रीरामः अपि श्रुतवान् । कोपेन दन्तान् कटकटीकुर्वन् सः बहिः आगतः । पुत्रीम् उद्दिश्य – ''एतत् सर्वं दृष्ट्वा अपि भवत्याः श्वशुरः कथं तूष्णीं तिष्ठति ?'' इति पृष्टवान् ।

''कस्मैचित् अपि मुखं न दर्शयामि इति वदन् सः मुखम् आच्छाद्य तिष्ठति'' इति उक्त्वा पुत्री पुनः पुनः रोदनं कृतवती ।

तत् दृष्ट्वा श्रीरामः – ''वत्से, रोदनं न करोतु । सः शेषगिरेः पुत्रः यत्र कुत्रापि वा भवतु, कथञ्चित् तम् अन्विष्य एव

आगमिष्यामि'' इति उक्त्वा छत्रं स्वीकृत्य बन्धोः गृहं प्रति प्रस्थितः एव ।

शेषगिरेः गृहं गतः श्रीरामः उच्चैः शेषगिरिम् आहूतवान् । तदा शेषगिरिः बहिः आगतवान् । तं दृष्ट्वा गाढं गृहीतवान् श्रीरामः उक्तवान् - ''मम पुत्र्या यदुक्तं तत् सत्यं किम् ? अग्रे किं करणीयम् इति चिन्तयतु । केवलं मुखम् आच्छाद्य स्थीयते चेत् किं वा प्रयोजनम् ? आगच्छतु । आवाम् उभौ अपि गत्वा तम् अन्विष्य आनयाव'' इति ।

ततः द्वौ अपि तस्मिन् नगरे सर्वत्र मठेषु, आश्रमेषु च अन्विष्य अन्ते कस्यचित् मठस्य समीपे एकं संन्यासिनं दृष्टवन्तौ । सः एव श्रीरामस्य जामाता आसीत् । शेषगिरिः स्वपुत्रम् उद्दिश्य यावत् किमपि वक्तुम् उद्युक्तः तावता श्रीरामः - ''भोः जामातृमहोदय ! आश्रमाः, मठाः च विरक्तानां कृते सन्ति, न तु वाणिज्ये हानिम् अनुभूतवतां कृते । लाभः, हानिः च वाणिज्ये नितरां सहजः । आगच्छतु, अहम् एव भवते वाणिज्यार्थं धनं ददामि । ऋणम् इत्येव तत् भावयतु कामम् । पत्नीं, गृहं च कदापि न परित्यजतु'' इति उक्त्वा तस्य दुःखम् अपनीय तेन, शेषगिरिणा च सह स्वनगरम् आगच्छत् ।

पतिं विरक्तवेषेणापि आगतं दृष्ट्वा लक्ष्मीः सन्तोषं प्राप्तवती । श्रीरामः उभयोः कृते अपि नूतनवस्त्राणि दत्तवान् । शेषगिरेः हस्ते पञ्चविंशतिसहस्रं रूप्यकाणि निक्षिप्य अवदत् - ''शेषगिरे, भवतः पुत्रः पुनः नूतनतया धान्यवाणिज्यं करोतु । अहं साहाय्यं करोमि । भवान् अपि साहाय्यं करोतु । विना कार्यं गृहे स्थित्या न कोऽपि लाभः । अतः उभौ अपि मिलित्वा तस्य साहाय्यं करवाव'' इति ।

तदा शेषगिरिः हसन् अवदत् - ''वस्तुतः मम पुत्रः वाणिज्ये हानिं न अनुभूतवान् । भवान् स्वस्य वाणिज्यस्य भारं पुत्राय अर्पयित्वा तूष्णीं त्रस्तः इव गृहे एव तिष्ठति स्म । अतः अहं मम पुत्रः च मिलित्वा एतत् नाटकं कृतवन्तौ । भवतः धनं स्वीकरोतु । भवान् बहिः गत्वा किमपि कार्यं करोतु । अन्यथा भवान् आलस्येन रोगग्रस्तः इव दृश्यते'' इति उक्त्वा पुत्रेण, स्नुषया च सह स्वनगरं गतवान् ।



# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

विजितां शीर्षिकां जून् - १९९७ मासे प्रकटयिष्यामः ।



S.G. SESHAGIRI



S.G. SESHAGIRI

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा एप्रिल् - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट्-काई) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया ।

**चन्दमामा(संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, २ घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

---

**'फेब्रवरी'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -**

प्रथमचित्रम् - **स्वतन्त्रौ आवां भुक्तिम् अभिलषावः ।**

द्वितीयचित्रम् - **भुक्तवन्तौ आवां स्वातन्त्र्यम् इच्छावः । ।**

प्रेषिका - बि. सावित्री, ९-१४, अरुणभवनम्, चेरुतुरुत्ति - ६७९ ५३१ (त.ना.)

---




Printed by B.V. REDDI at Prasad Process private Ltd., 188, N.S.K. Salai, Madras - 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras - 600 026 (India), Controlling Editor: NAGI REDDI.